अविद्याऽस्मिता-राग-द्वेषाभिनिवेशाः पञ्च क्लेशाः॥
॥ ३ ॥

'क्लेशाः' अविद्यादयो वक्ष्यमाणलक्षणाः पञ्च। ते बाधनालक्षणं परितापमुपजनयन्तः क्लेशशब्दवाच्या भवन्ति। ते हि चेतसि प्रवर्त्तमानाः संसारलक्षणं* गुणपरिणामं द्रढयन्ति ॥ ३ ॥

सत्यपि सर्व्वेषां तुल्ये क्लेशत्वे मूलभूतत्वादविद्यायाः प्राधान्यं प्रतिपादयितुमाह।

अविद्या क्षेत्रमुत्तरेषां प्रसुप्त-तनु-विच्छिन्नोदाराणां॥
॥ ४ ॥

'अविद्या' मोहः, अनात्मन्यात्माभिमान इति यावत्। सा 'क्षेत्रं' प्रसवभूमिः, 'उत्तरेषां' अस्मितादीनां प्रत्येकं प्रसुप्तादिभेदेन चतुर्विधानां। अतो यत्राविद्या विपर्य्ययज्ञानरूपा शिथिली भवति, तत्र क्लेशानां अस्मितादीनां नोद्भवो दृश्यते, विपर्य्ययज्ञानसद्भावे च तेषामुद्भवदर्शनात् स्थितमेव मूलत्वमविद्यायाः†। 'प्रसुप्त-तनु-विच्छिन्नोदाराणां', इति तत्र ये क्लेशाश्चित्तभूमौ स्थिताः प्रबोधकाभावे स्वकार्य्यं नारभन्ते, ते 'प्रसुप्ताः', इत्युच्यते। यथा बाल्यावस्थायां। बालस्य हि वासनारूपेण स्थिता अपि क्लेशाः प्रबोधकसहकार्य्यभावेन‡ नाभिव्यज्यन्ते। ते 'तनवः', ये स्वस्वप्रतिपक्षभावनया शिथिलीकृतकार्य्यसम्पादनशक्तयो वासनाविशेषतया चेतस्यवस्थिताः प्रभूतां सामग्रीमन्तरेण

* संस्कारलक्षणमिति B पुस्तकपाठः।

† स्थितमेवं मूलमविद्याया इति B पुस्तकपाठः।

‡ स्वबोधकसहकार्य्यभावेनेति B, C पुस्तकपाठः।

न स्वकार्य्यमारब्धुं क्षमाः। यथाभ्यासवतो हि योगिनः। ते 'विच्छिन्नाः', ये केनचिद् बलवता क्लेशेनाभिभूतशक्तयस्तिष्ठन्ति। यथा द्वेषावस्थायां रागः, रागावस्थायां वा द्वेषः। न ह्यनयोः परस्परविरुद्धयोर्युगपत् सम्भवोऽस्ति। ते 'उदाराः', ये प्राप्तसहकारिसन्निधयः स्वं स्वं कार्य्यमभिनिर्वर्त्तयन्ति। यथा सर्व्वदैव योगपरिपन्थिनो व्युत्थानदशायां*। एषां प्रत्येकं चतुर्व्विधानामपि मूलभूतत्वेन स्थिताप्यविद्याऽन्वयित्वेन प्रतीयते। न हि कश्चिदपि क्लेशानां विपर्य्ययान्वयनिरपेक्षरूपाणां† स्वरूपमुपलभ्यते। तस्याञ्च मिथ्याभूतायामविद्यायां‡ सम्यक्ज्ञानेन निवर्त्तितायां दग्धबीजकल्पानां एषां न क्वचित् प्ररोहोऽस्तीति अविद्यानिमित्तत्वमविद्यान्वयश्चैषां निश्चीयते। अतः सर्व्वेऽप्यविद्याव्यपदेशभाजः। सर्व्वेषाञ्च क्लेशानां चित्तविक्षेपकारित्वात् योगिना प्रथममेव तदुच्छेदे यत्नः कर्त्तव्य इति ॥ ४ ॥

अविद्याया लक्षणमाह।

**अनित्याशुचि-दुःखानात्मसु नित्य-शुचि-सुखात्मख्यातिरविद्या ॥ ५ ॥**

अतस्मिंस्तत्प्रतिभासः§ 'अविद्या', इति अविद्यायाः सामान्यलक्षणं। तस्या एव भेदप्रतिपादनं। 'अनित्येषु' घटादिषु, नित्यत्वाभिमानः

---

* व्युत्पादनदशायामिति B पुस्तकपाठः।

† विपर्य्ययान्वयनिरपेक्षाणामिति B, E। विपर्य्यासान्वयनिरपेक्षाणामिति F पुस्तकपाठः।

‡ मिथ्याज्ञानरूपायामविद्यायामिति B, C, E पुस्तकपाठः।

§ अतस्मिंस्तदिति प्रतिभास इति A पुस्तकपाठः।

अविद्येत्युच्यते । एवम् 'अशुचिषु' कायादिषु, शुचित्वाभिमानः । 'दुःखेषु' च विषयेषु, सुखत्वाभिमानः* । 'अनात्मनि' शरीरे, आत्मत्वाभिमानः† । एतेनापुण्ये पुण्यभ्रमोऽनर्थे चार्थभ्रमो व्याख्यातः ॥ ५ ॥

अस्मितां व्याख्यातुमाह ।

दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥

'दृक्शक्तिः' पुरुषः । 'दर्शनशक्तिः' रजस्तमोभ्यामनभिभूतः‡ सात्त्विकः परिणामोऽन्तःकरणरूपः । तयोर्भोग्यभोक्तृत्वेन जडाजडत्वेन-चात्यन्तं भिन्नयोः 'एकताभिमानः 'अस्मिता', इत्युच्यते । यथा प्रकृतिर्वस्तुतः कर्त्तृत्व-भोक्तृत्वरहितापि कर्त्र्यहं भोक्त्र्यहमित्यभिमन्यते, सोऽयमस्मिताख्यो विपर्य्यासः क्लेशः ॥ ६ ॥

रागस्य लक्षणमाह ।

सुखानुशयी रागः§ ॥ ७ ॥

सुखमनुशेते इति 'सुखानुशयी', सुखज्ञस्य सुखानुस्मृतिपूर्व्वकः सुख-साधनेषु तृष्णारूपो गर्द्धः 'रागसंज्ञः‖ क्लेशः ॥ ७ ॥

द्वेषस्य लक्षणमाह ।

दुःखानुशयी द्वेषः¶ ॥ ८ ॥

---

* सुखाभिमान इति B, C, E पुस्तकपाठः ।

† आत्माभिमान इति B, C, E पुस्तकपाठः ।

‡ रजस्तमोभ्यामनभिधान इति B, E पुस्तकपाठः ।

§ सुखानुशयो राग इति B, C, E पुस्तकपाठः ।

‖ गर्व्वो रागसंज्ञक इति B, E पुस्तकपाठः ।

¶ दुःखानुशयो द्वेष इति B, C, E पुस्तकपाठः ।

'दुःखं' लक्षणं ।* तदभिज्ञस्य तदनुस्मृतिपूर्व्वकः तत्साधनेष्वन-भिमतो योऽयं निन्दात्मकः† सः 'द्वेषलक्षणः क्लेशः ॥ ८ ॥

अभिनिवेशस्य लक्षणमाह‡ ।

## स्वरसवाही विदुषोऽपि तथानुबन्धोऽभिनिवेशः§ ॥ ९ ॥

पूर्व्वजन्मानुभूतमरणदुःखानुभववासनाबलात्|| भयरूपः समुपजा-यमानः शरीरविषयादिभिर्मम वियोगो माभूदित्यन्वहं शरीरानुबन्ध-रूपः सर्व्वस्यैवाक्रमेर्ब्रह्मपर्य्यन्तं¶ निमित्तं विना प्रवर्त्तमानः 'अभिनि-वेशाख्यः क्लेशः । तदेवं व्युत्थानस्य क्लेशात्मकत्वात् एकाग्रताभ्यासेन** प्रयत्नं क्लेशाः परिहर्त्तव्याः ॥ ९ ॥

न चाज्ञातानां तेषां परिहारः शक्यः कर्त्तुमिति तज्ज्ञानाय तेषां उद्देशं चैवं विभागं लक्षणं†† चाभिधाय स्थूलसूक्ष्मभेदभिन्नानां तेषां प्रहाणोपायविभागमाह‡‡ ।

## ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥

---

* प्रतिकूललक्षणमिति B, C, E पुस्तकपाठः ।

† अनभिमतो या निन्दा इति E पुस्तकपाठः ।

‡ अभिनिवेशमाहेति H पुस्तकपाठः ।

§ तथा रूढोऽभिनिवेश इति C पुस्तकपाठः । अयमेव पाठो भाष्य-कारेण धृतः ।

|| पूर्व्वजन्मानुभवमरणदुःखानुभववासनाबलादिति H पुस्तकपाठः ।

¶ सर्व्वस्यैवाकृतेर्ब्रह्मपर्य्यन्तमिति H पुस्तकपाठः ।

** एकाग्रताभ्यासकामेनेति C, E, पुस्तकपाठः ।

†† विभागलक्षणमिति E पुस्तकपाठः ।

‡‡ प्रहरणोपायमाहेति B, C, E पुस्तकपाठः ।

ते 'सूक्ष्माः', क्लेशाः, ये वासनारूपेणावस्थिता न वृत्तिरूपं* परिणाममारभन्ते। 'ते', 'प्रतिप्रसवेन' प्रतिलोमपरिणामेन, 'हेयाः' त्यक्तव्याः। स्वकारणास्मितायां कृतार्थं सवासनं चित्तं यदा प्रविष्टं भवति, तदा कुतस्तेषां निर्मूलानां सम्भवः॥ १०॥

स्थूलानां हानोपायमाह।

## ध्यानहेयास्तद्वृत्तयः॥ ११॥

तेषां क्लेशानामारब्धकार्य्याणां याः सुखदुःखमोहात्मिकाः 'वृत्तयः', ताः, 'ध्यानेनैव चित्तैकाग्रतालक्षणेन, 'हेयाः' हातव्या इत्यर्थः। चित्तपरिकर्म्माभ्यासमात्रेणैव स्थूलत्वात् तासां निवृत्तिर्भवति, यथा वस्त्रादौ घनः स्थूलो मलः प्रक्षालनमात्रेणैव निवर्त्तते। यस्तु तत्र सूक्ष्मः स तैस्तैरुपायैरुत्तापनप्रभृतिभिरेव निवर्त्तयितुं शक्यते॥ ११॥

एवं क्लेशानां तत्त्वमभिधाय कर्म्माशयस्याभिधातुमाह†।

## क्लेशमूलः कर्म्माशयो दृष्टादृष्टजन्मवेदनीयः॥ १२॥

'कर्म्माशयः', इत्यनेन तस्य स्वरूपमभिहितं, यतो वासनारूपाण्येव कर्म्माणि। 'क्लेशमूलः', इत्यनेन कारणमभिहितं, यतः कर्म्मणां शुभाशुभानां क्लेशा एव निमित्तं। 'दृष्टादृष्टजन्मवेदनीयः',‡ इत्यनेन फलमुक्तं। अस्मिन्नेव जन्मनि अनुभवनीयः 'दृष्टजन्मवेदनीयः'§।

---

* स्वप्रवृत्तिरूपमिति B, E पुस्तकपाठः।

† कर्म्माशयमभिधातुमाहेति H पुस्तकपाठः।

‡ दृष्टवेदनीय इति B, E पुस्तकपाठः। जन्मवेदनीय इति C पुस्तकपाठः।

§ दृष्टवेदनीय इति E पुस्तकपाठः। जन्मवेदनीय इति C पुस्तकपाठः।

जन्मान्तरानुभवनीयः 'अदृष्टजन्मवेदनीयः'। तथाहि कानिचित् पुण्यानि कर्म्माणि देवताराधनादीनि तीव्रसंवेगेनैव कृतानि इहैव जन्मनि फलं जात्यायुर्भोगलक्षणं प्रयच्छन्ति, यथा नन्दीश्वरस्य भगवन्महेश्वराराधनबलादिहैव जन्मनि जात्यादयो विशिष्टाः* प्रादुर्भूताः। एवमन्येषां विश्वामित्रादीनां तपःप्रभावाज्जात्यायुषी। केषाञ्चिज्जातिरेव, यथा तीव्रसंवेगेन दुष्टकर्म्मकृतां नहुषादीनां जात्यन्तरपरिणामः, उर्व्वश्याश्च कार्त्तिकेयवने लतारूपतया†। एवं व्यस्तसमस्तरूपत्वेन‡ यथायोगं योज्यं ॥ १२ ॥

इदानीं कर्म्माशयस्य स्वभेदभिन्नं फलमाह।

## सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥

'मूलं उक्तलक्षणाः क्लेशाः, तेष्वनभिभूतेषु' सत्सु, कर्म्मणां कुशलाकुशलरूपाणां 'विपाकः' फलं, 'जात्यायुर्भोगाः' भवन्ति। 'जातिः' मनुष्यत्वादिः। 'आयुः' चिरकालं शरीरसम्बन्धः। 'भोगाः' विषयाः इन्द्रियाणि सुखदुःखसंवित्च, कर्म्मकरणभावसाधनव्युत्पत्त्या§ भोगशब्दस्य। इदमत्र तात्पर्य्यं चित्तभूमौ अनादिकालसञ्चिताः कर्म्मवासना यथा यथा पाकमुपयान्ति, तथा तथा गुणप्रधानभावेन स्थिता जात्यायुर्भोगलक्षणं स्वकार्य्यमारभन्ते ॥ १३ ॥

---

* जात्यायुर्भोगविशिष्टा इति B, C, E पुस्तकपाठः।

† लताख्या तयेति B, E पुस्तकपाठः।

‡ व्यस्तसमस्तत्वेनेति B, E पुस्तकपाठः।

§ कर्म्मकरणभावव्युत्पत्त्येति H पुस्तकपाठः।

उक्तानां कर्म्मफलत्वे जात्यादीनां स्वकारणकर्म्मानुसारेण कार्य्य-कर्तृत्वमाह ।

**ते ह्लाद-परितापफलाः पुण्यापुण्यहेतुत्वात्* ॥ १४ ॥**

'ह्लादः' सुखं, 'परितापः' दुःखं, ह्लाद-परितापौ फले येषां 'ते' तथोक्ताः। 'पुण्यं' कुशलं कर्म्म, तद्विपरीतं 'अपुण्यं', ते पुण्यापुण्ये कारणे येषां तेषां भावस्तस्मात् । एतदुक्तं भवति, पुण्यकर्म्मारब्धा जात्यायुर्भोगा ह्लादफलाः। अपुण्यकर्म्मारब्धाः परितापफलाः॥ १४ ॥

एतच्च प्राणिमात्रापेक्षया द्वैविध्यं, योगिनस्तु सर्व्वं दुःखमित्याह ।

**परिणाम-ताप-संस्कारदुःखैर्गुणवृत्तिविरोधाच्च सर्व्वं दुःखमेव† विवेकिनः ॥ १५ ॥**

परिज्ञातक्लेशादिविवेकस्य परिदृश्यमानं सकलमेव भोगसाधनं सविषस्वान्नवत्‡ 'दुःखमेव' प्रतिकूलवेदनीयमेवेत्यर्थः। यस्मादत्यन्ता-भिजातः§ योगी दुःखलेशेनाप्युद्विजते‖ । यथाऽक्षिपात्रमूर्णातन्तुस्पर्श-मात्रेणैव महतीं पीडामनुभवति नेतरदङ्गं, तथा विवेकी स्वल्पदुःखा-नुषङ्गेणाऽपि¶ त्रिरज्यते। कथमित्याह 'परिणाम-ताप-संस्कार-

---

* पुण्यापुण्यहेतुफलत्वादिति E पुस्तकपाठः ।
† दुःखमेव सर्व्वं विवेकिन इति E पुस्तकपाठः ।
‡ सविषान्नवदिति H पुस्तकपाठः ।
§ यस्मादत्यन्ताभिज्ञात इति H पुस्तकपाठः ।
‖ दुःखलेशेनाप्युद्विजत इति B, E पुस्तकपाठः ।
¶ स्वल्पदुःखानुसम्बन्धेनापीति C पुस्तकपाठः । सुखदुःखानुबन्धेनापीति B, E पुस्तकपाठः ।

दुःखैः'। विषयाणामुपभुज्यमानानां यथायथं गर्द्धाभिवृद्धेस्तदप्राप्तिकृतस्य दुःखस्यापरिहार्य्यत्वात् दुःखान्तरसाधनत्वाच्चास्त्येव दुःखरूपतेति 'परिणामदुःखत्वं'। उपभुज्यमानेषु सुखसाधनेषु तत्प्रतिपन्थिनं* प्रति द्वेषस्य सर्व्वदैवावस्थितत्वात् सुखानुभवकालेऽपि तापदुःखं दुष्परिहारमिति 'तापदुःखता'। 'संस्कारदुःखत्वं' स्वाभिमतानभिमतविषयसन्निधाने सुखसंवित् दुःखसंविच्चोपजायमाना तथाविधमेव स्वक्षेत्रे संस्कारमारभते, संस्काराच्च पुनस्तथाविधसंविदनुभव इत्यपरिमितसंस्कारोत्पत्तिद्वारेण संसारानुच्छेदात् सर्व्वस्यैव दुःखत्वं। 'गुणवृत्तिविरोधाच्च' इति, गुणानां सत्वरजस्तमसां या वृत्तयः सुखदुःखमोहरूपाः परस्परमभिभाव्याभिभावकत्वेन विरुद्धा जायन्ते, तासां सर्व्वत्रैव दुःखानुबन्धाद् दुःखत्वं। एतदुक्तं भवति। ऐकान्तिकीं आत्यन्तिकीञ्च दुःखनिवृत्तिमिच्छतो विवेकिन उक्तरूपकारणचतुष्टयं यावत् सर्व्वे विषया दुःखरूपतया प्रतिभान्ति। तस्मात् सर्व्वकर्म्मविपाको दुःखरूप एवेत्युक्तं भवति ॥ १५ ॥

तदेवमुक्त† क्लेश-कर्म्माशय-विपाकराशेरविद्याप्रभवत्वात् अविद्यायाश्च मिथ्याज्ञानरूपतया सम्यग्ज्ञानोच्छेद्यत्वात् सम्यग्ज्ञानस्य च ससाधनहेयोपादेयावधारणरूपत्वात्तदभिधानायाह।

**हेयं दुःखमनागतं ॥ १६ ॥**

---

* तत्प्रतिबन्धनं इति E पुस्तकपाठः। तत्परिपन्थिनमिति C पुस्तकपाठः।
† तदेवमुक्तस्येति B, C, E पुस्तकपाठः। एतदेवमुक्तस्य G पुस्तकपाठः।

भूतस्यातिक्रान्तत्वात्* अनुभूयमानस्य च त्यक्तुमशक्यत्वात् अनागतमेव संसारदुःखं हातव्यमित्युक्तं भवति† ॥ १६ ॥

हेयहेतुमाह ।

## द्रष्टृ-दृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥

'द्रष्टा' चिद्रूपः पुरुषः । 'दृश्यं' बुद्धितत्त्वं । तयोरविवेकख्यातिपूर्व्वको योऽसौ 'संयोगः' भोग्यभोक्तृत्वेन सन्निधानं, सः, 'हेयस्य' दुःखस्य गुणपरिणामरूपस्य संसारस्य, 'हेतुः' कारणं, तन्निवृत्त्या संसारनिवृत्तिर्भवतीत्यर्थः ॥ १७ ॥

द्रष्टृ-दृश्ययोः संयोग इत्युक्तं, तत्र दृश्यस्य स्वरूपं कार्य्यं प्रयोजनञ्चाह ।

## प्रकाश-क्रिया-स्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यं ॥ १८ ॥

'प्रकाशः' सत्त्वस्य धर्म्मः । 'क्रिया' प्रवृत्तिरूपा रजसः । 'स्थितिः' नियमरूपा तमसः । ताः प्रकाशक्रियास्थितयः 'शीलं' स्वाभाविकं रूपं, यस्य तत् तथाविधं, इति स्वरूपमस्य निर्द्दिष्टं । 'भूतेन्द्रियात्मकं', इति । 'भूतानि' स्थूलसूक्ष्मभेदेन पृथिव्यादीनि गन्धतन्मात्रादीनि च । 'इन्द्रियाणि' बुद्धीन्द्रिय-कर्म्मान्तःकरणभेदेन त्रिविधानि । उभयमेतद् ग्राह्य-ग्रहणरूपं 'आत्मा' स्वरूपाभिन्नः परिणामः, यस्य तत्

---

* व्यतिक्रान्तत्वादिति H पुस्तकपाठः । निष्क्रान्तत्वादिति E, C, ञ पुस्तकपाठः ।

† इत्युक्तमितीति H पुस्तकपाठः ।

तथाविधं, इत्यनेन कार्य्यमस्योक्तं । 'भोगः' कथितलक्षणः । 'अपवर्गः' विवेकख्यातिपूर्व्विका संसारनिवृत्तिः । तौ भोगापवर्गौ 'अर्थः' प्रयोजनं, यस्य तत् तथाविधं 'दृश्यं', इत्यर्थः ॥ १८ ॥

तस्य च दृश्यस्य नानावस्थारूपपरिणामात्मकस्य हेयत्वेन ज्ञातव्यत्वात् अवस्थाः कथयितुमाह ।

**विशेषाविशेष-लिङ्गमात्रालिङ्गानि गुणपर्व्वाणि ॥ ॥ १९ ॥**

'गुणानां', 'पर्व्वाणि' अवस्थाविशेषाश्चत्वारः, ज्ञातव्याः, इत्युपदिष्टं भवति । तत्र 'विशेषाः' महाभूतेन्द्रियाणि । 'अविशेषाः' तन्मात्रान्तःकरणे । 'लिङ्गमात्रं' बुद्धिः । 'अलिङ्गं' अव्यक्तं, इत्युक्तं* । सर्व्वत्र त्रिगुणरूपस्याव्यक्तस्यान्वयित्वेन प्रत्यभिज्ञानादवश्यं ज्ञातव्यत्वेन योगकाले चत्वारि पर्व्वाणि निर्द्दिष्टानि ॥ १९ ॥

एवं हेयत्वेन दृश्यस्य प्रथमं ज्ञातव्यत्वात् तदवस्थासहितं व्याख्यायोपादेयं द्रष्टारं व्याकर्त्तुमाह† ।

**द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥**

'द्रष्टा' पुरुषः । 'दृशिमात्रः' चेतनामात्रः‡ । मात्रग्रहणं धर्म्मिधर्म्मनिरासार्थं । केचिद्धि चेतनामात्मनो धर्म्ममिच्छन्ति । सः 'शुद्धो-

---

* इत्युक्तं भवतीति B, E पुस्तकपाठः ।

† वक्तुमाहेति C, E पुस्तकपाठः ।

‡ चेतनमात्र इति E पुस्तकपाठः ।

ऽपि' परिणामित्वाद्यभावेन ख्यप्रतिष्ठोऽपि, 'प्रत्ययानुपश्यः'। 'प्रत्ययाः' विषयोपरक्तानि ज्ञानानि, तानि 'अनु' अव्यवधानेन प्रतिसंक्रमाद्य-भावेन, पश्यति। एतदुक्तं भवति। जातविषयोपरागायामेव बुद्धौ सन्निधानमात्रेणैव पुरुषस्य द्रष्टृत्वमिति॥ २० ॥

स एव च भोक्तेत्याह।

## तदर्थ एव* दृश्यस्यात्मा ॥ २१ ॥

'दृश्यस्य' प्रागुक्तलक्षणस्य, 'आत्मा' यत् स्वरूपं, सः 'तदर्थः' तस्य पुरुषस्य भोक्तृत्वसम्पादनं नाम स्वार्थपरिहारेण प्रयोजनं। न हि प्रधानं प्रवर्त्तमानमात्मनः किञ्चित् प्रयोजनमपेक्ष्य प्रवर्त्तते, किन्तु पुरुषस्य भोक्तृत्वसम्पादनायेति† ॥ २१ ॥

यद्येवं पुरुषस्य भोगसम्पादनमेव प्रयोजनं‡, तदा§ सम्पादिते तस्मिंस्तन्निष्प्रयोजनं विरतव्यापारं स्यात्, तस्मिंश्च परिणामशून्ये शुद्धत्वात् सर्व्वे द्रष्टारो बन्धरहिताः स्युः। ततश्च संसारोच्छेद इत्याशङ्क्याह।

## कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसर्व्वसाधारणत्वात् ॥ २२ ॥

यद्यपि विवेकख्यातिपर्य्यन्तात् भोगसम्पादनात् कमपि 'कृतार्थं', पुरुषं, 'प्रति', 'तत्', 'नष्टं' विरतव्यापारं, तथापि 'सर्व्वपुरुषसाधा-

* स तदर्थ एवेति B, E पुस्तकपाठः।
† भोगं सम्पादयामीतीति G, H पुस्तकपाठः।
‡ यदिदं पुरुषस्य भोगसम्पादनं तदेव प्रयोजनमिति B, E पुस्तकपाठः।
§ तदानीमिति B, E पुस्तकपाठः।

रकत्वात् अन्यान् प्रति 'अनष्टव्यापारं अवतिष्ठते*'। अतः प्रधानस्य सकलभोक्तृसाधारणत्वात् न कदाचनापि† विनाशः, एकमुक्तौ वा न सर्व्वमुक्तिप्रसङ्ग इत्युक्तं भवति॥ २२ ॥

दृश्य-द्रष्टारौ व्याख्याय संयोगं व्याख्यातुमाह।

## स्व-स्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः॥२३॥

कार्य्यद्वारेणास्य लक्षणं करोति। 'स्वशक्तिः' दृश्यस्य स्वभावः। 'स्वामिशक्तिः' द्रष्टुः स्वरूपं। तयोर्द्वयोरपि संवेद्य-संवेदकत्वेन व्यवस्थितयोर्या 'स्वरूपोपलब्धिः', तस्याः कारणं यः 'संयोगः', स च सहजभोग्य-भोक्तृभावस्वरूपान्नान्यः। न हि तयोर्नित्ययोर्व्यापकयोश्च स्वस्वरूपादतिरिक्तः कश्चित् संयोगः। यदेव भोग्यस्य भोग्यत्वं, भोक्तुश्च भोक्तृत्वं अनादिसिद्धं स एव संयोगः॥ २३॥

तस्यापि कारणमाह।

## तस्य हेतुरविद्या‡॥ २४॥

या पूर्व्वं विपर्य्यासात्मिका मोहरूपा 'अविद्या', व्याख्याता, सा 'तस्य' अविवेकख्यातिरूपस्य संयोगस्य, कारणं॥ २४॥

हेयं हानक्रियाकर्म्मोच्यते किम्पुनस्तद्धानमित्याह§।

---

* अनष्टमव्यापारमवतिष्ठत इति A पुस्तकपाठः।

† न कदाचिदपीति B, E पुस्तकपाठः। न कथचिदपीति C पुस्तकपाठः।

‡ अस्य हेतुरविद्येति B, E पुस्तकपाठः। तस्य हेतुर्द्वयमविद्येति G पुस्तकपाठः। परन्त्वीदृशपाठस्य समस्तादर्शपुस्तकेष्वसत्त्वात् भाष्यकृदनुद्धृतत्वाच्च न समीचीनत्वं।

§ किं पुनर्हानमित्याहेति B, E पुस्तकपाठः।

तदभावात् संयोगाभावो हानं तद्दृशेः कैवल्यं ॥ ॥ २५ ॥

'तस्याः' अविद्यायाः स्वरूपविरुद्धेन सम्यग् ज्ञानेनोन्मूलितायाः, योऽयं 'अभावः', तस्मिन् सति, तत्कार्य्यस्य 'संयोगस्य', अपि 'अभावः', तत् 'हानं' इत्युच्यते। अयमर्थः नैतस्य मूर्त्तद्रव्यवत् परित्यागो युज्यते, किन्तु जातायां विवेकख्यातावविवेकख्यातिनिमित्तः* संयोगः स्वयमेव निवर्त्तत इति तस्य हानं। यदेव च संयोगस्य हानं 'तत्', एव नित्यकैवल्यस्यापि† पुरुषस्य 'कैवल्यं', व्यपदिश्यते। तदेवं संयोगस्य स्वरूपं‡ कारणं कार्य्यञ्चाभिहितं ॥ २५ ॥

अथ हानोपायकथनद्वारेण उपादेयकारणमाह।

विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥

अन्ये गुणाः अन्यः पुरुष इत्येवंविधस्य 'विवेकस्य', 'ख्यातिः' प्रख्या, सा 'हानस्य' दृश्यपरित्यागस्य, 'उपायः'§ कारणं। कीदृशी 'अविप्लवा' न विद्यते विप्लवो विच्छेदोऽन्तरान्तरा‖ व्युत्थानरूपो यस्याः सा 'अविप्लवा'।

इदमत्र तात्पर्य्यं। प्रतिपक्षभावनाबलात् अविद्याप्रविलये विनि-

---

* अविवेकनिमित्त इति B, G पुस्तकपाठः।
† नित्यं कैवल्यस्येति H पुस्तकपाठः।
‡ तदेवं दृश्यस्य संयोगस्वरूपमिति B, E पुस्तकपाठः।
§ दुःखपरित्यागस्योपाय इति B, E पुस्तकपाठः।
‖ अन्तरात्मनेति E पुस्तकपाठः।

वृत्तत्वादहं-कर्तृत्वाद्यभिमानाया रजस्तमोमलानभिभूताया बुद्धेरन्त-र्मुखाया या चिच्छायासंक्रान्तिः सा विवेकख्यातिरित्युच्यते। तस्याश्च सन्ततमविच्छेदेन प्रवृत्तायां* दृश्यस्याधिकारनिवृत्तेर्भवत्येव कैवल्यं॥ ॥ २६ ॥

उत्पन्नविवेकख्यातेः† पुरुषस्य यादृशी प्रज्ञा भवति, तां कथयन् विवेकख्यातेरेव स्वरूपमाह।

## तस्य सप्तधा प्रान्तभूमौ प्रज्ञा॥ २७॥

'तस्य' उत्पन्नविवेकज्ञानस्य, ज्ञातव्यविवेकरूपा 'प्रज्ञा', 'प्रान्तभूमौ' सकलसालम्बनसमाधिभूमिपर्य्यन्तं, सप्तप्रकारा भवति।

तत्र कार्य्यविमुक्तिरूपा चतुःप्रकारा। ज्ञातं मया ज्ञेयं। न ज्ञातव्यं किञ्चिदस्ति। क्षीणा मे क्लेशा, न मे किञ्चित् क्षेतव्यमस्ति। अधिगतं मया ज्ञानं, प्राप्ता मया विवेकख्यातिः। इतिप्रत्ययान्तर-परिहारेण तस्यामवस्थायामीदृश्येव प्रज्ञा जायते। ईदृशी प्रज्ञा कार्य्यविषयं निर्मलं ज्ञानं कार्य्यविमुक्तिरित्युच्यते।

चित्तविमुक्तिस्त्रिविधा। चरितार्था मे बुद्धिः। गुणाश्च हृता-धिकाराः गिरिशिखरनिपतिता इव ग्रावाणो न पुनः स्थितिं यास्यन्ति, स्वकारणे प्रलयाभिमुखानां मोहाभिधानमूलकारणा-भावान्निष्प्रयोजनत्वाच्चामीषां कुतः प्ररोहः। सात्मीभूतश्च मे समाधिः। तस्मिन् सति स्वरूपप्रतिष्ठोऽहमिति। ईदृशी त्रिःप्रकारा चित्तविमुक्तिः।

---

* सन्ततत्वेन प्रवृत्तायामिति H, C पुस्तकपाठः।

† उद्भूतविवेकख्यातेरिति C, E पुस्तकपाठः।

तदेवमीदृश्यां सप्तविधायां प्रान्तभूमिप्रज्ञायामुपजातायां पुरुषः केवल इत्युच्यते ॥ २७ ॥

विवेकख्यातिः संयोगाभावे हेतुरित्युक्तं* । तस्यास्तूत्पत्तौ किं निमित्तमित्यत आह ।

**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेक-ख्यातेः ॥ २८ ॥**

'योगाङ्गानि वक्ष्यमाणानि । तेषां 'अनुष्ठानात्' ज्ञानपूर्व्वकाद्-भ्यासात्, 'आविवेकख्यातेः', 'अशुद्धिक्षये' चित्तसत्त्वस्य प्रकाशाव-रणलक्षणक्लेशरूपाशुद्धिक्षये,† या 'ज्ञानदीप्तिं' तारतम्येन सात्त्विकः परिणामः, विवेकख्यातिपर्य्यन्तः‡ स तस्याः ख्यातेर्हेतुरित्यर्थः ॥ ॥ २८ ॥

योगाङ्गानुष्ठानादशुद्धिक्षय इत्युक्तं, कानि पुनस्तानि योगाङ्गा-नीति तेषां उद्देशमाह ।

**यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि ॥ २९ ॥**

इह कानिचित्समाधेः साक्षादुपकारकत्वेनान्तराण्यङ्गानि§ यथा 'धारणादीनि । कानिचित् प्रतिपक्षभूतहिंसादिवितर्कोन्मूलनद्वारेण

---

* इत्युक्तं भवतीति B, E पुस्तकपाठः ।

† क्लेशस्याशुद्धिक्षय इति B, E पुस्तकपाठः ।

‡ विवेकख्यातिपूर्व्वक इति B, C, E पुस्तकपाठः ।

§ अन्तरङ्गाणीति B, C, E पुस्तकपाठः ।

समाधेरुपकुर्व्वन्ति, यथा 'यम-नियमादयः'। तचासनादीनामुत्तरोत्तरमुपकारकत्वं यथा सत्यासनजये प्राणायामस्थैर्य्यं। एवमुत्तरत्रापि योज्यं* ॥ २९ ॥

क्रमेण एषां स्वरूपमाह।

**अहिंसा-सत्यास्तेय-ब्रह्मचर्य्यापरिग्रहा यमाः ॥ ३० ॥**

तत्र प्राणवियोगप्रयोजनव्यापारो हिंसा। सा च सर्व्वानर्थहेतुः। तदभावः 'अहिंसा'। हिंसायाः सर्व्वकालमेव† परिहार्य्यत्वात् प्रथमं तदभावरूपाया अहिंसाया निर्द्देशः। 'सत्यं' वाङ्मनसयोर्यथार्थत्वं‡। स्तेयं परस्वापहरणं। तदभावः 'अस्तेयं'। 'ब्रह्मचर्य्यं' उपस्थसंयमः। 'अपरिग्रहः' भोगसाधनानामस्वीकरणं§। त एते|| अहिंसादयः पञ्च 'यम'शब्दवाच्याः योगाङ्गत्वेन निर्द्दिष्टाः ॥ ३० ॥

एषां विशेषमाह।

**एते¶ जाति-देश-काल-समयानवच्छिन्नाः सार्व्वभौममहाव्रतम् ॥ ३१ ॥**

'जातिः' ब्राह्मणत्वादिः। 'देशः' तीर्थादिः। 'कालः' चतुर्द्दश्यादिः।

---

* न्याय्यमिति G पुस्तकपाठः।

† सर्व्वप्रकारेणैवेति B, C, E पुस्तकपाठः।

‡ वाङ्मनसोर्यथार्थत्वमिति B, E पुस्तकपाठः।

§ अस्वीकार इति C, E पुस्तकपाठः।

|| तत्र ते अहिंसादय इति B, E पुस्तकपाठः।

¶ एते त्विति B, E पुस्तकपाठः।

'समय:' ब्राह्मणप्रयोजनादिः। एतैश्चतुर्भिः 'अनवच्छिन्नाः', पूर्व्वोक्ता अहिंसादयो यमाः सर्व्वासु क्षित्यादिषु चित्तभूमिषु भवाः 'महाव्रतं' इत्युच्यते। तद् यथा ब्राह्मणं न हनिष्यामि, तीर्थे कंचन न हनिष्यामि, चतुर्द्दश्यां न हनिष्यामि, देव-ब्राह्मणाद्यर्थव्यतिरेकेण* न हनिष्यामीत्येवं चतुर्विधावच्छेदव्यतिरेकेण कश्चित् क्वचित् कदाचित् कस्मिंश्चिदर्थे न हनिष्यामीत्यनवच्छिन्नाः। एवं सत्यादिषु यथायोगं योज्यं। इत्यमनियतीभूताः† सामान्येनैव प्रवृत्ताः महाव्रतमित्युच्यते, न पुनः परिच्छिन्नावधारणं‡ ॥ ३१ ॥

नियममाह§।

## शौच-सन्तोष-तपः-स्वाध्यायेश्वरप्रनिधानानि नियमाः ॥ ३२ ॥

'शौचं', द्विविधं वाह्यमान्तरञ्च। वाह्यं मृज्जलादिभिः कायादिप्रक्षालनं। आन्तरं मैत्र्यादिभिश्चित्तमलानां प्रक्षालनं। 'सन्तोषः' तुष्टिः। शेषाः प्रागेव कृतव्याख्यानाः‖। एते शौचादयः 'नियमशब्द-वाच्याः ॥ ३२ ॥

कथमेषां योगाङ्गत्वमित्यत आह।

---

* देवब्राह्मणप्रयोजनव्यतिरेकेण कमपीति B, C, E पुस्तकपाठः।

† इत्यमनियतीकृता इति H पुस्तकपाठः।

‡ न पुनः परकीयास्त्र्यादिधारणमिति A पुस्तकपाठः।

§ नियमानाहेति A पुस्तकपाठः।

‖ प्रागेव व्याख्याता इति B, C, E पुस्तकपाठः। भूतव्याख्याना इति H पुस्तकपाठः।

## वितर्कबाधने प्रतिपक्षभावनं ॥ ३३ ॥

वितर्क्यन्त इति 'वितर्काः' योगपरिपन्थिनो हिंसादयः। तेषां 'प्रतिपक्षभावने सति, यदा बाधा भवति,'* तदा योगः सुकरो भवतीति भवत्येव यमनियमानां योगाङ्गत्वं ॥ ३३ ॥

इदानीं वितर्काणां स्वरूपं भेदं प्रकारं कारणं फलञ्च क्रमेणाह।

## वितर्का हिंसादयः कृत-कारितानुमोदिता लोभ-क्रोध-मोहपूर्व्वका मृदु-मध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥ ३४ ॥

एते पूर्व्वोक्ताः 'हिंसादयः', प्रथमं त्रिधा भिद्यन्ते 'कृत-कारितानुमोदितभेदेन। तत्र स्वयं निष्पादिताः 'कृताः'। कुरु कुर्व्विति प्रयोजकव्यापारेण समुत्पादिताः 'कारिताः'। अन्येन क्रियमाणाः साधु साध्वित्यङ्गीकृताः† 'अनुमोदिताः'। एतच्च त्रैविध्यं परस्परव्यामोहनिवारणायोच्यते‡। अन्यथा मन्दमतिरेवं मन्येत न मया स्वयं हिंसा कृतेति नास्ति मे दोष इति। एतेषां कारण-प्रतिपादनायाह, 'लोभ-क्रोध-मोहपूर्व्वकाः', इति। यद्यपि लोभः क्रोधः प्रथमं निर्द्दिष्टः§ तथापि सर्व्वक्लेशानां मोहस्यानात्मन्यात्मा-

* यदि बाधा भवतीति E, A, D, F पुस्तकपाठः। यथा बाधा भवतीति C पुस्तकपाठः।

† साध्वित्यङ्गीकृता इति A पुस्तकपाठः।

‡ मोहनिवारणायोच्यत इति B, E पुस्तकपाठः।

§ लोभः प्रथमं निर्द्दिष्ट इति G पुस्तकपाठः।

भिमानलक्षणस्य निदानत्वात् तस्मिन् सति स्वपरविभागपूर्व्वकत्वेन लोभ-क्रोधादीनामुद्भवात्* मूलत्वमवसेयं। मोहपूर्व्विका सर्व्वा दोषजातिरित्यर्थः। 'लोभः' तृष्णा। 'क्रोधः' कृत्याकृत्यविवेकोन्मूलकः प्रज्वलनात्मकश्चित्तधर्म्मः। प्रत्येकं कृतादिभेदेन त्रिप्रकारा अपि हिंसादयो मोहादिकारणत्वेन त्रिधा भिद्यन्ते। तेषामेव पुनरवस्थाभेदेन त्रैविध्यमाह 'मृदु-मध्याधिमात्राः'। 'मृदवः' मन्दा न तीव्राः नापि मध्यमाः। 'मध्याः' न मन्दा नापि तीव्राः। 'अधिमात्राः' तीव्राः, न मध्या नापि मन्दाः। इति नव भेदाः†। इत्थं त्रैविध्ये सति सप्तविंशतिर्भवति। मृद्वादीनामपि प्रत्येकं मृदु-मध्याधिमात्रभेदात् त्रैविध्यं सम्भवति। तत् यथायोगं योज्यं। तद् यथा मृदुमृदुः मृदुमध्यो मृदुतीव्र इति। एषां फलमाह 'दुःखाज्ञानानन्तफलाः', इति। 'दुःखं' प्रतिकूलतयावभासमानो राजसश्चित्तधर्म्मः। 'अज्ञानं' मिथ्याज्ञानं संशयविपर्य्यासरूपं‡। ते दुःखाज्ञाने 'अनन्तं' अपरिच्छिन्नं, 'फलं', येषां ते तथोक्ताः। इत्थं तेषां स्वरूप-कारणादिभेदेन§ ज्ञातानां प्रतिपक्षभावनया योगिना परिहारः कर्त्तव्य इत्युपदिष्टं भवति॥ ३४॥

एषामभ्यासात् प्रकर्षं गच्छतामनु निष्पादिन्यः सिद्धयो यथा भवन्ति, तथा क्रमेण प्रतिपादयितुमाह।

---

* समुद्भवादिति B, E पुस्तकपाठः।

† इत्येवं नव भेदा इति B, C, E पुस्तकपाठः।

‡ संशयविपर्य्ययरूपमिति G पुस्तकपाठः।

§ स्वरूपादिभेदेनेति H पुस्तकपाठः।

## अहिंसाप्रतिष्ठायां* तत्सन्निधौ वैरत्यागः॥ ३५ ॥

'तस्याहिंसां भावयतः, 'सन्निधौ',† सहजविरोधिनामप्यहिनकुलादीनां 'वैरत्यागः' निर्मत्सरतयावस्थानं भवति। हिंसारता हिंस्रत्वं परित्यजन्तीत्यर्थः ॥ ३५॥

सत्याभ्यासवतः किं भवतीत्याह।

## सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्॥ ३६ ॥

क्रियमाणा हि 'क्रियाः' यागादिकाः, 'फलं' स्वर्गादिकं, प्रयच्छन्ति। तस्य तु सत्याभ्यासवतो योगिनः तथा सत्यं प्रकृष्यते, यथा अकृतायामपि क्रियायां योगी फलमाप्नोति‡। तद्वचनाद् यस्य कस्यचित् क्रियामकुर्व्वतोऽपि क्रियाफलं भवतीत्यर्थः॥ ३६ ॥

अस्तेयाभ्यासवतः फलमाह।

## अस्तेयप्रतिष्ठायां सर्व्वरत्नोपस्थानम्॥ ३७ ॥

'अस्तेयं', यदाऽभ्यस्यति योगी तदा तस्य प्रकर्षात् निरभिलाषस्यापि 'सर्व्वतोदिग्भ्यः§ 'रत्नान्युपतिष्ठन्ते॥ ३७ ॥

ब्रह्मचर्य्याभ्यासस्यापि फलमाह।

## ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः॥ ३८ ॥

---

* सूत्रे, अहिंसाप्रतिष्ठायामितिपाठः G पुस्तके नास्ति।

† वृत्तौ, सन्निधावितिपाठः G पुस्तके नास्ति।

‡ फलमाश्रयतीति B, C, E पुस्तकपाठः।

§ सर्व्वतो दिक्स्थानीति G पुस्तकपाठः।

यः किल 'ब्रह्मचर्य्यं', अभ्यस्यति, तस्य तत्प्रकर्षान्निरतिशयं 'वीर्य्यं' सामर्थ्यं आविर्भवति। वीर्य्यनिरोधो हि ब्रह्मचर्य्यं तस्य प्राकर्षाच्छरीरेन्द्रियमनःसु वीर्य्यं प्रकर्षमागच्छति ॥ ३८ ॥

अपरिग्रहाभ्यासस्य फलमाह।

## अपरिग्रहस्थैर्य्ये जन्मकथन्तासम्बोधः ॥ ३९ ॥

कथमित्यस्य भावः 'कथन्ता'। जन्मनः कथन्ता 'जन्मकथन्ता'। तस्याः 'सम्बोधः' सम्यग्ज्ञानं। जन्मान्तरे कोऽहमासं कीदृशः किं कार्य्यकारीति जिज्ञासायां सर्व्वमेव सम्यग्जानातीत्यर्थः।

न केवलं भोगसाधनपरिग्रह एव परिग्रहः। किन्तु यावदात्मनः शरीरपरिग्रहोऽपि परिग्रहः भोगसाधनत्वाच्छरीरस्य। तस्मिन् सति रागानुबन्धात्* वहिर्मुखायामेव प्रवृत्तौ न तात्त्विकज्ञानप्रादुर्भावः। यदा पुनः शरीरादिपरिग्रहनैरपेक्ष्येण माध्यस्थ्यमवलम्बते तदा मध्यस्थस्य रागादित्यागात् सम्यग्ज्ञानहेतुर्भवत्येव पूर्व्वापरजन्मसम्बोधः ॥ ॥ ३९ ॥

उक्ता यमानां सिद्धयः। अथ नियमानाह।

## शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥

यः 'शौचं भावयति, तस्य 'स्वाङ्गेष्वपि कारणस्वरूपपर्य्यालोचनद्वारेण 'जुगुप्सा' घृणा, समुपजायते। अशुचिरयं कायः नात्राग्रहः† कर्त्तव्य इत्यमुनैव हेतुना 'परैः' अन्यैश्च कायवद्भिः, 'असंसर्गः' सम्पर्का-

* रागानुसन्धादिति H पुस्तकपाठः।

† मास्य सङ्ग्रह इति E पुस्तकपाठः।

भावः* संसर्गपरिवर्जनमित्यर्थः। यः किल स्वमेव कायं जुगुप्सते तत्मद-वद्यदर्शनात् स कथं परकीयैस्तथाभूतैः कायैः संसर्गमनुभवति ॥ ४० ॥

शौचस्यैव फलान्तरमाह।

## किञ्च† सत्त्वशुद्धि-सौमनस्यैकाग्रतेन्द्रियजयात्मदर्शन-योग्यत्वानि च ॥ ४१ ॥

भवन्तीति‡ वाक्यशेषः। 'सत्त्वं' प्रकाशसुखाद्यात्मकं§। तस्य 'शुद्धिः' रजस्तमोभ्यामनभिभवः। 'सौमनस्यं' खेदाननुभवेन मानसी प्रीतिः। 'एकाग्रता' नियतेन्द्रियविषये‖ चेतसः स्थैर्यं। 'इन्द्रिय-जयः' विषयपराङ्मुखानामिन्द्रियाणां स्वात्मन्यवस्थानं। 'आत्मदर्शने' विवेकख्यातिरूपे, चित्तस्य 'योग्यत्वं'। शौचाभ्यासवत एते सत्त्वशुद्ध्या-दयः क्रमेण प्रादुर्भवन्ति। तथा हि शौचात् सत्त्वशुद्धिः¶। सत्त्वशुद्धेः सौमनस्यं। सौमनस्यादेकाग्रता**। एकाग्रतायाः†† इन्द्रियजयः। इन्द्रियजयादात्मदर्शनयोग्यतेति ॥ ४१ ॥

सन्तोषाभ्यासस्य फलमाह।

## सन्तोषादनुत्तमः सुखलाभः ॥ ४२ ॥

---

* संसर्गाभाव इति H पुस्तकपाठः।

† किञ्चेतिपाठः सवस्वादर्शपुस्तकेषु नास्ति, परन्तु भाष्यकारेण धृतः।

‡ सम्भवन्तीतीति H पुस्तकपाठः।

§ प्रकाशसुखाद्यात्मकत्वमिति B, E, C पुस्तकपाठः।

‖ नियतविषये इति B, C, E पुस्तकपाठः।

¶ शौचात् सत्त्वशुद्धिरितिपाठः A, B, C, D, E, H पुस्तकेषु नास्ति।

** सौमनस्यादैकाग्र्यमिति G पुस्तकपाठः।

†† ऐकाग्र्यादिति G पुस्तकपाठः।

'सन्तोषप्रकर्षेण'* योगिनस्तथाविधमान्तरं सुखमाविर्भवति यस्य बाह्यं विषयसुखं शतांशेनापि न समानं† भवति‡ ॥ ४२ ॥

तपसः फलमाह ।

## कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥

'तपः समभ्यस्यमानं चेतसः क्लेशादिलक्षणाशुद्धिक्षयद्वारेण§ 'कायेन्द्रियाणां', 'सिद्धिं उत्कर्षं आदधाति|| ।

अयमर्थः । चान्द्रायणादिना चित्तक्लेशक्षयः । तत्क्षयादिन्द्रियाणां सूक्ष्म-व्यवहित-विप्रकृष्टदर्शनादिसामर्थ्यमाविर्भवति,कायस्य यथेच्छम-णुमहत्त्वादीनि ॥ ४३ ॥

स्वाध्यायस्य फलमाह ।

## स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥ ४४ ॥

अभिप्रेतमन्त्रजपादिलक्षणे 'स्वाध्याये प्रकृष्यमाणे, योगिनः 'इष्टया अभिप्रेतया, 'देवतया, 'सम्प्रयोगः', भवति । सा देवता प्रत्यक्षीभवतीत्यर्थः ॥ ४४ ॥

ईश्वरप्रणिधानस्य फलमाह ।

## समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥

---

* सन्तोषप्रकर्षे इति C पुस्तकपाठः ।

† सममिति H, G पुस्तकपाठः ।

‡ भवतीत्ययं पाठः G पुस्तके नास्ति ।

§ क्लेशादिलक्षणाशुद्धिक्षयद्वारेणेति B, C, E पुस्तकपाठः ।

|| आपादयतीति B, C, E पुस्तकपाठः ।

'ईश्वरे योऽयं भक्तिविशेषस्तस्मात् 'समाधेः' उक्तलक्षणस्य, आविर्भावो भवति। यस्मात् स भगवानीश्वरः प्रसन्नः सन्नन्तरायरूपान् क्लेशान् परिहृत्य* समाधिमुद्बोधयति ॥ ४५ ॥

यम-नियमानुक्ता आसनमाह ।

**तत्र† स्थिरसुखमासनम् ॥ ४६ ॥**

आस्यते अनेनेति 'आसनं' पद्मासन-दण्डासन-स्वस्तिकासनादि । तद् यदा 'स्थिरं' निष्कम्पं, 'सुखं' अनुद्वेजकं‡ भवति, तदा योगाङ्गतां भजते ॥ ४६ ॥

तस्यैव स्थिरसुखत्वापत्त्यर्थमुपायमाह ।

**प्रयत्नशैथिल्यानन्त्यसमापत्तिभ्याम् ॥ ४७ ॥**

तदासनं 'प्रयत्नशैथिल्येन', 'आनन्त्यसमापत्त्या', च स्थिरं सुखं भवतीति सम्बन्धः ।

यदा यदासनं बध्नामीति इच्छां करोति तदा प्रयत्नशैथिल्येऽप्यक्लेशेनैव तदासनं निष्पद्यते । यदा आकाशादिगते आनन्त्ये चेतसः समापत्तिः क्रियते अवधानेन तादात्म्यमापद्यते, तदा देहाहङ्काराभावान्नासनं दुःखजनकं भवति। अस्मिंश्चासनजये सति समाध्यन्तरायभूता न प्रभवन्त्यङ्गमेजयत्वादयः ॥ ४७ ॥

तस्यैवानुनिष्पादितस्य फलमाह ।

---

* अपहृत्येति G पुस्तकपाठः ।

† तत्रेति शब्दः A, B, C, D, E, F, G पुस्तकेषु नास्ति । परन्तु भाष्यकारेण धृतः ।

‡ अनुद्वेजनीयमिति G पुस्तकपाठः ।

ततो द्वन्द्वानभिघातः ॥ ४८ ॥

तस्मिन्नासनजये सति 'द्वन्द्वैः' शीतोष्ण-क्षुत्तृष्णादिभिः, योगी नाभिहन्यत इत्यर्थः ॥ ४८ ॥

आसनजयानन्तरं* प्राणायाममाह।

तस्मिन् सति श्वास-प्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥

आसनस्थैर्य्ये 'सति', तन्निमित्तकः प्राणायामलक्षणो योगाङ्गविशेषः अनुष्ठेयो भवति। कीदृशः 'श्वासप्रश्वासयोर्गतिविच्छेदलक्षणः'। श्वास-प्रश्वासौ उक्तलक्षणौ। तयोर्द्वेधा रेचक-पूरकद्वारेण† वाह्याभ्यन्तरेषु स्थानेषु 'गतेः' प्रवाहस्य, 'विच्छेदः' धारणं, 'प्राणायामः', उच्यते ॥ ४९ ॥

तस्यैव सुखावगमाय विभज्य स्वरूपं कथयति‡।

स तु वाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥

'वाह्यवृत्तिः श्वासो रेचकः। अन्तरवृत्तिः प्रश्वासः पूरकः। अन्तस्तम्भवृत्तिः कुम्भकः। तस्मिन् जलमिव कुम्भे निश्चलतया प्राणाः अवस्थाप्यन्ते§ इति कुम्भकः।

---

* आसनजयादनन्तरमिति G पुस्तकपाठः।

† तयोस्त्रिधा रेचक-पूरककुम्भकद्वारेणेति A, D, F, G पुस्तकपाठः।

‡ दर्शयतीति B, C, E पुस्तकपाठः।

§ प्राणोऽवस्थाप्यत इति C पुस्तकपाठः।

त्रिविधोऽयं प्राणायामः 'देशेन, 'कालेन, 'सङ्ख्यया चोपलक्षितः 'दीर्घसूक्ष्मसंज्ञको भवति। देशेनोपलक्षितो यथा नासाद्वादशान्तादौ नासामारभ्य द्वादशाङ्गुलिपर्य्यन्तमित्यर्थः। कालेनोपलक्षितो यथा षट्-त्रिंशन्मात्रादिप्रमाणः*। सङ्ख्यया उपलक्षितो यथा इयतो वारान् कृतः†। एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातः‡भवति। एतज्ज्ञानाय सङ्ख्याग्रहण-मुपात्तं। उद्घातो नाभिमूलात् प्रेरितस्य वायोः शिरस्यभिहननं॥५०॥

त्रीन् प्राणायामानभिधाय चतुर्थमभिधातुमाह।

**वाह्याभ्यन्तरविषयाक्षेपी चतुर्थः॥५१॥**

प्राणस्य 'वाह्यो विषयः' नासाद्वादशान्तादिः। 'आभ्यन्तरो विषयः' हृदयनाभिचक्रादिः। तौ द्वौ विषयौ 'आक्षिप्य' पर्य्यालोच्य यः स्तम्भ-रूपो गतिविच्छेदः स 'चतुर्थः', प्राणायामः। तृतीयस्मात् कुम्भ-काख्यादयमस्य विशेषः। स वाह्याभ्यन्तरविषयावपर्य्यालोच्य सहसा तप्तोपलनिपतितजलन्यायेन युगपत् स्तम्भवृत्त्या निष्पद्यते। अस्य तु विषयद्वयाक्षेपको निरोधः। अयमपि पूर्व्ववत् देश-काल-सङ्ख्याभि-रुपलक्षितो द्रष्टव्यः॥ ५१॥

चतुर्विधस्यास्य फलमाह।

**ततः क्षीयते प्रकाशावरणम्॥५२॥**

'ततः' तस्मात् प्राणायामात्, 'प्रकाशस्य' चित्तसत्त्वगतस्य, यत् 'आवरणं' क्लेशरूपं, तत् 'क्षीयते' विनश्यतीत्यर्थः॥ ५२॥

फलान्तरमाह।

---

* षड्विंशतिमात्रादिप्रमाण इति B पुस्तकपाठः।

† एतान् वारान् कृत इति B पुस्तकपाठः।

‡ G पुस्तके सर्व्वत्र उद्घात इत्यत्र उद्धात इति पाठः।

धारणासु च योग्यता मनसः ॥ ५३ ॥

'धारणाः' वक्ष्यमाणलक्षणाः* । तासु प्राणायामैः क्षीणदोषं† मनो यत्र यत्र धार्य्यते, तत्र तत्र स्थिरं भवति‡ न विक्षेपं भजते ॥ ५३ ॥

प्रत्याहारस्य लक्षणमाह ।

स्वस्वविषयसम्प्रयोगाभावे§ चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥

इन्द्रियाणि स्वस्वविषयेभ्यः प्रत्याह्रियन्ते प्रतिकूलतया आह्रियन्तेऽस्मिन् इति 'प्रत्याहारः' । स च कथं निष्पद्यत इत्याह । चक्षुरादीनां इन्द्रियाणां स्वः स्वो विषयः रूपादिः । तेन 'सम्प्रयोगः' तदाभिमुख्येन प्रवर्त्तनं । तदभावस्तदाभिमुख्यं परित्यज्य स्वरूपमात्रेऽवस्थानं । तस्मिन् सति चित्तस्वरूपमात्रानुकारीणीन्द्रियाणि भवन्ति, यतश्चित्तमनुवर्त्तमानानि मधुकरराजमिव मधुमक्षिकाः॥, सर्व्वाणीन्द्रियाणि प्रतीयन्ते । अतश्चित्तनिरोधे तानि प्रत्याहृतानि भवन्ति ॥ ५४ ॥

तेषां तत्स्वरूपानुकारः प्रत्याहार उक्तः । फलमाह ।

ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥

---

* वक्ष्यमाणा इति H पुस्तकपाठः ।

† क्षीणक्षोभमिति C पुस्तकपाठः ।

‡ स्थिरीभवतीति B, E पुस्तकपाठः ।

§ स्वविषयासम्प्रयोगे इति B, E पुस्तकपाठः । स्वस्वविषयासम्प्रयोगे इति B पुस्तकपाठः ।

|| मधुकरराजमिव मक्षिका इति B, E पुस्तकपाठः । मधुकरराजमिव मधुकरमक्षिका इति G पुस्तकपाठः

अभ्यस्यमाने हि प्रत्याहारे तथा 'वश्यान्यायत्तानि 'इन्द्रियाणि सम्प-द्यन्ते, यथा वाह्यविषयाभिमुखतां नीयमानान्यपि न यान्तीत्यर्थः॥ ५५॥

तदेवं प्रथमपादोक्तलक्षणस्य योगस्याङ्गभूतं क्लेशतनूकरणफलं क्रि-यायोगमभिधाय क्लेशानामुद्देशं कारणं क्षेत्रं स्वरूपं फलञ्चोक्त्वा कर्मणा-मपि भेदं कारणं स्वरूपं फलञ्चाभिधाय विपाकस्य स्वरूपं कारणञ्चा-भिहितं। ततस्त्याज्यत्वात् क्लेशादीनां, ज्ञानव्यतिरेकेन त्यागस्याशक्यत्वात्, ज्ञानस्य च शास्त्रायत्तत्वात्, शास्त्रस्य च हेयाहेयकारणोपादेयोपा-दानकारणत्वेन चतुर्व्यूहत्वात्, हेयस्य च हानव्यतिरेकेण स्वरूपानि-ष्पत्तेर्हानसहितं चतुर्व्यूहं स्वस्वकारणसहितमभिधायोपादानकारण-भूताया विवेकख्यातेः कारणभूतानामन्तरङ्गवहिरङ्गभावेन स्थितानां योगाङ्गानां* यमादीनां स्वरूपं फलसहितं व्याहृत्य धारणापर्य्य-न्तानां चासनादीनां परस्परमुपकार्य्योपकारकभावेनावस्थितानां उद्दे-शमभिधाय परस्परलक्षणकारणपूर्व्वकं† फलमभिहितं।

तदयं योगी यमनियमादिभिः प्राप्तवीजभावः। आसनप्राणा-यामैरङ्कुरितः। प्रत्याहारेण पुष्पितः‡। ध्यानधारणासमाधिभिः§ फलिष्यतीति व्याख्यातः साधनपादः।

इति महाराजाधिराजश्रीभोजदेवविरचितायां राजमार्त्तण्डाभि-धायां पातञ्जलयोगशास्त्रसूत्रवृत्तौ द्वितीयः साधनपादः॥२॥

---

* योगानामिति G पुस्तकपाठः।

† प्रत्येकलक्षणकारणपूर्व्वमिति B, C, E पुस्तकपाठः। परस्परलक्षण-पूर्व्वकमिति G पुस्तकपाठः।

‡ कुसुमित इति G पुस्तकपाठः।

§ चित्तधारणासमाधिभिरिति H पुस्तकपाठः।

## अथ तृतीयः पादः ।

यत्पादपद्मस्मरणादणिमादिविभूतयः ।
भवन्ति भाविनामस्तु भूतनाथः स भूतये ॥

तदेवं पूर्व्वोद्दिष्टं धारणाद्यङ्गत्रयं निर्णेतुं संयमसंज्ञाभिधानपूर्व्वकं बाह्याभ्यन्तरादिसिद्धिप्रतिपादनाय लक्षयितुमुपक्रमते ।

तत्र धारणायाः स्वरूपमाह ।

### देशबन्धश्चित्तस्य धारणा* ॥ १ ॥

'देशे' नाभिचक्रनासाग्रादौ । चित्तस्य 'बन्धः' विषयान्तरपरिहारेण यत् चित्तस्य स्थिरीकरणं । सा 'चित्तस्य धारणा', उच्यते ।

अयमर्थः । मैत्र्यादिचित्तपरिकर्म्मवासितान्तःकरणेन यमनियमवता जितासनेन परिहृतप्राणविक्षेपेण प्रत्याहृतेन्द्रियग्रामेण निर्व्वाधे प्रदेशे ऋजुकायेन जितद्वन्द्वेन योगिना नासाग्रादौ सम्प्रज्ञातस्य समाधेरभ्यासाय चेतसः स्थिरीकरणं कर्त्तव्यमिति ॥ १ ॥

धारणामभिधाय ध्यानमभिधातुमाह ।

### तत्र प्रत्ययैकतानता ध्यानं ॥ २ ॥

'तत्र' तस्मिन् देशे† यत्र चित्तं धृतं तत्र । 'प्रत्ययस्य' ज्ञानस्य ।

---

* चित्तधारणेति H पुस्तकपाठः ।

† तस्मिन्नर्थे इति B, E पुस्तकपाठः ।

या 'एकतानता' विसदृशपरिणामपरिहारद्वारेण यदेव धारणाया-मालम्बनीकृतं तदालम्बनतयैव निरन्तरमुत्पत्तिः, सा 'ध्यानं', उच्यते ॥
॥ २ ॥

चरमं योगाङ्गं समाधिमाह।

**तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥**
**॥ ३ ॥**

'तदेव' उक्तलक्षणं ध्यानं। यत्र 'अर्थमात्रनिर्भासं' अर्थाकारसमावेशादुद्भूतार्थरूपं, न्यग्भूतज्ञानरूपत्वेन 'स्वरूपशून्यमिव',* आपद्यते, स 'समाधिः', इत्युच्यते। सम्यगाधीयते एकाग्रीक्रियते विक्षेपान् परिहृत्य यत्र मनः स 'समाधिः' ॥ ३ ॥

उक्तलक्षणस्य योगाङ्गत्रयस्य व्यवहाराय स्वशास्त्रे तान्त्रिकीं संज्ञां कर्त्तुमाह।

**त्रयमेकत्र संयमः ॥ ४ ॥**

एकस्मिन् विषये ध्यान-धारणा-समाधित्रयं चितयं प्रवर्त्तमानं 'संयमसंज्ञया† शास्त्रे व्यवह्रियते ॥ ४ ॥

तस्य फलमाह।

**तज्जयात् प्रज्ञालोकः ॥ ५ ॥**

'तस्य संयमस्य। 'जयात्' अभ्यासेन सात्म्योत्पादनात्‡। 'प्रज्ञायाः'

---

* स्वरूपशून्यतामिवेति H पुस्तकपाठः।

† संयमसंज्ञ इति B, E पुस्तकपाठः।

‡ सात्मोत्पादनादिति H पुस्तकपाठः।

ज्ञातव्यविवेकस्वरूपायाः । 'आलोकः' प्रसरो भवति* । प्रज्ञा ज्ञेयं सम्यगवभासयतीत्यर्थः ॥ ५ ॥

तस्योपयोगमाह ।

## तस्य भूमिषु विनियोगः ॥ ६ ॥

'तस्य' संयमस्य, 'भूमिषु' स्थूलसूक्ष्मालम्बनभेदेन स्थितासु† चित्तवृत्तिषु, 'विनियोगः', कर्त्तव्यः । अधरामधरां चित्तभूमिं जितां जितां ज्ञात्वोत्तरस्यां भूमौ संयमः कार्य्यः । न ह्ययमनात्मी-कृताधरभूमिः उत्तरस्यां भूमौ संयमं कुर्व्वाणः फलभाग् भवति ॥ ६ ॥

साधनपादे योगाङ्गान्यष्टावुद्दिश्य पञ्चानां लक्षणं विधाय त्रयाणां कथं न कृतमित्याशङ्क्याह ।

## त्रयमन्तरङ्गं पूर्व्वेभ्यः ॥ ७ ॥

'पूर्व्वेभ्यः' यमादिभ्यो योगाङ्गेभ्यः पारम्पर्य्येण समाधेरुपकार-केभ्यः । धारणादियोगाङ्गत्रयं सम्प्रज्ञातस्य समाधेः 'अन्तरङ्गं', समा-धिस्वरूपनिष्पादनात् ॥ ७ ॥

तस्यापि समाध्यन्तरापेक्षया वहिरङ्गत्वमाह ।

## तदपि वहिरङ्गं निर्व्वीजस्य ॥ ८ ॥

'निर्व्वीजस्य' निरालम्बनस्य शून्यभावनापरपर्य्यायस्य समाधेः । एतदपि योगाङ्गत्रयं, 'वहिरङ्गं', पारम्पर्य्येणोपकारकत्वात् ॥ ८ ॥

---

* प्रसादो भवतीति D पुस्तकपाठः ।

† अवस्थितास्विति E पुस्तकपाठः ।

इदानीं योगाङ्गसिद्धीराख्यातुकामः* संयमस्य विषयपरिशुद्धिं कर्तुं क्रमेण परिणामत्रयमाह।

**व्युत्थान-निरोधसंस्कारयोरभिभव-प्रादुर्भावौ नि-रोधक्षणचित्तान्वयो निरोधपरिणामः॥ ९॥**

'व्युत्थानं' क्षिप्त-मूढ-विक्षिप्ताख्यं भूमित्रयं। 'निरोधः' प्रकृष्ट-सत्त्वस्याङ्गितया चेतसः परिणामः। ताभ्यां व्युत्थान-निरोधाभ्यां यौ जनितौ 'संस्कारौ तयोर्यथाक्रमं 'अभिभव—प्रादुर्भावौ', यदा भवतः। 'अभिभवः' न्यग्भूततया कार्य्यकरणासामर्थ्येनावस्थानं। 'प्रादुर्भावः' वर्त्तमानेऽध्वनि अभिव्यक्तरूपतयावस्थानं। तदा 'निरोधक्षणे', 'चित्तस्योभयवृत्तित्वात् 'अन्वयः', यः सः 'निरोधपरिणामः', इत्युच्यते।

अयमर्थः। यदा व्युत्थानसंस्काररूपो धर्म्मः तिरोभूतो भवति, निरोधसंस्काररूपश्चाविर्भवति, धर्म्मिरूपतया च चित्तमुभयत्रान्वयित्वेनावस्थितं प्रतीयते, तदा स निरोधपरिणामशब्देन व्यवह्रियते। यद्यपि चलत्वाद्गुणवृत्तस्य चेतसो निश्चलत्वं नास्ति, तथाप्येवम्भूतपरिणामः स्थैर्य्यमुच्यते॥ ९॥

अस्यैव फलमाह।

**तस्य प्रशान्तवाहिता संस्कारात्॥ १०॥**

'तस्य' चेतसः, उक्तान्निरोधसंस्कारात्', 'प्रशान्तवाहिता', भवति। परिहृतविक्षेपतया सदृशप्रवाहपरिणामि चित्तं भवतीत्यर्थः॥ १०॥

निरोधपरिणाममभिधाय समाधिपरिणाममाह।

---

* सिद्धीराख्यातुकाम इति D पुस्तकपाठः

**सर्व्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥**

'सर्व्वार्थता' चलत्वान्नानाविधाऽर्थग्रहणं, चित्तस्य विक्षेपो धर्म्मः । एकस्मिन्नेवावलम्बने सदृशपरिणामिता 'एकाग्रता',* सापि† चित्तस्य धर्म्मः । तयोर्यथाक्रमं 'क्षयोदयौ' । 'सर्व्वार्थतालक्षणस्य धर्म्मस्य 'क्षयः' अत्यन्तमभिभवः । 'एकाग्रतालक्षणस्य धर्म्मस्य प्रादुर्भावोऽभिव्यक्तिः । 'चित्तस्य' उद्रिक्तसत्त्वस्य, अन्वयितयाऽवस्थानं 'समाधिपरिणामः', इत्युच्यते ।

पूर्व्वस्मात् परिणामादयं विशेषः । तत्र संस्कारलक्षणयोर्धर्म्मयोरभिभव—प्रादुर्भावौ । पूर्व्वस्य व्युत्थानसंस्काररूपस्य धर्म्मस्य‡ न्यग्भावः । उत्तरस्य निरोधसंस्काररूपस्योद्भवोऽनभिभूतत्वेनावस्थानं । इह तु क्षयोदयाविति । सर्व्वार्थतारूपविक्षेपस्यात्यन्ततिरस्कारादनुत्पत्तिरतीताध्वनि प्रवेशः क्षयः । एकाग्रतालक्षणस्य धर्म्मस्योद्भवो वर्त्तमानेऽध्वनि प्रकटत्वं ॥ ११ ॥

तृतीयमेकाग्रतापरिणाममाह ।

**शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥ ॥ १२ ॥**

समाहितस्यैव 'चित्तस्य', एकप्रत्ययो वृत्तिविशेषः । 'शान्तः'

---

* एकाग्रत्वमिति H पुस्तकपाठः ।

† तदपीति H पुस्तकपाठः ।

‡ व्युत्थानसंस्कारस्येति H, C पुस्तकपाठः ।

अतीतमध्वानं प्रविष्टः। अपरस्तु उदितः' वर्त्तमानेऽध्वनि स्फुरितः। द्वावपि समाहितचित्तत्वेन 'तुल्यौ' एकरूपालम्बनत्वेन सदृशौ, 'प्रत्ययौ'। उभयत्रापि समाहितस्यैव चित्तस्यान्वयित्वेनावस्थानं यत् सः 'एकाग्रतापरिणामः', इत्युच्यते॥ १२॥

चित्तपरिणामोक्तरूपमन्यत्रातिदिशन्नाह।

## एतेन भूतेन्द्रियेषु धर्म्म-लक्षणावस्थापरिणामा व्याख्याताः* ॥ १३ ॥

'एतेन' त्रिविधोक्तेन चित्तपरिणामेन। 'भूतेषु' स्थूल-सूक्ष्मेषु। 'इन्द्रियेषु' बुद्धिकर्म्मान्तःकरणभेदेनावस्थितेषु† । 'धर्म्म-लक्षणावस्था-भेदेन त्रिविधः परिणामो व्याख्यातोऽवगन्तव्यः।

अवस्थितस्य धर्म्मिणः पूर्व्वधर्म्मनिवृत्तौ धर्म्मान्तरापत्तिर्धर्म्मपरि-णामः‡, यथा मृल्लक्षणस्य धर्म्मिणः पिण्डरूपधर्म्मपरित्यागेन घटरूप-धर्म्मान्तरस्वीकारः§, 'धर्म्मपरिणामः' इत्युच्यते। 'लक्षणपरिणामः,' यथा तस्यैव घटस्यानागताध्वपरित्यागेन वर्त्तमानाध्वस्वीकारः, तत्परित्यागेन चातीताध्वपरिग्रहः। 'अवस्थापरिणामः', यथा तस्यैव घटस्य प्रथमद्वितीययोः सदृशयोर्धर्म्मलक्षणयोरन्वयित्वेन। यतश्चलं गुणवृत्तं नापरिणममानं क्षणमप्यास्ते ॥ १३ ॥

---

* धर्म्मलक्षणावस्थापरिणामो व्याख्यात इति C पुस्तकपाठः।

† बुद्धिकर्म्मभेदेनावस्थितेष्विति E पुस्तकपाठः।

‡ परिणाम इति H पुस्तकपाठः।

§ घटरूपधर्म्मान्तराङ्गीकार इति C पुस्तकपाठः।

ननु कोऽयं धर्म्मीत्याशङ्क्य धर्म्मिणो लक्षणमाह।

**तत्र* शान्तोदिताव्यपदेश्यधर्म्मानुपाती धर्म्मी† ॥१४॥**

'शान्ताः' ये कृतस्वस्वव्यापारा अतीतेऽध्वन्यनुप्रविष्टाः। 'उदिताः' ये अनागतमध्वानं परित्यज्य वर्त्तमानेऽध्वनि स्वस्वव्यापारं कुर्व्वन्ति। 'अव्यपदेश्याः' ये शक्तिरूपेण स्थिता व्यपदेष्टुं न शक्यन्ते। यथा सर्व्वं सर्व्वात्मकमित्येवमादयः‡। नियतकार्य्यकारणरूपतया योग्यतयाऽवच्छिन्ना शक्तिरेवेह धर्म्मशब्देनाभिधीयते। तं त्रिविधमपि धर्म्मं योऽनुपतत्यनुवर्त्तते अन्वयित्वेन स्वीकरोति, सः 'शान्तोदिताव्यपदेश्यधर्म्मानुपाती धर्म्मी', इत्युच्यते, यथा सुवर्णं रुचकरूपधर्म्मपरित्यागेन§ स्वस्तिकधर्म्मान्तरपरिग्रहे सुवर्णरूपतयाऽनुवर्त्तमानं। तेषु धर्म्मेषु कथञ्चिद्भिन्नेषु धर्म्मिरूपतया सामान्यात्मना धर्म्मरूपतया विशेषात्मनाऽवस्थितमनुपातित्वेनावभासते ॥ १४ ॥

एकस्य धर्म्मिणः कथमनेके परिणामा इत्याशङ्कामपनेतुमाह।

**क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥**

---

* तत्रेतिपदं अस्मल्लब्धषड़ादर्शपुस्तकेषु नास्ति। परन्तु भाष्यकारेण सूत्रान्तर्गतत्वेन परिगृहीतत्वात् अस्माभिरपि तथैव व्यवस्थापितं।

† "योग्यतावच्छिन्ना धर्म्मिणः शक्तिरेव धर्म्मः" इत्ययं भाष्यपाठः काश्यां मुद्रितयोगभाष्यपुस्तके सूत्रान्तर्गत एव मुद्रितः। परन्त्वयं न समीचीनः वार्त्तिककारेण उक्तपाठस्य भाष्यमध्ये परिगणितत्वात्।

‡ तेषां यथा स्वं सर्व्वात्मकमित्येवमादय इति H पुस्तकपाठः। तेषां यथा सर्व्वं सर्व्वात्मकमित्येवमादय इति C पुस्तकपाठः।

§ मुद्रिकारूपधर्म्मपरित्यागेनेति C पुस्तकपाठः।

धर्म्माणामुक्तलक्षणानां यः 'क्रमः,' तस्य यत् प्रतिक्षणं 'अन्यत्वं', परिदृश्यमानं, 'परिणामस्य' उक्तलक्षणस्य, 'अन्यत्वे' नानाविधत्वे, 'हेतुः' लिङ्गं ज्ञापकं भवति। अयमर्थः। योऽयं नियतक्रमः, मृच्चूर्णात् मृत्पिण्डस्ततः कपालानि तैश्च घट इत्येवं रूपः परिदृश्यमानः परिणामस्यान्यत्वमावेदयति। तस्मिन् एव धर्म्मिणि यो लक्षणपरिणामस्यावस्थापरिणामस्य च क्रमः सोऽप्यनेनैव न्यायेन परिणामान्यत्वे गमकोऽवगन्तव्यः। सर्व्व एव च* भावा नियतेनैव क्रमेण प्रतिक्षणं परिणममानाः परिदृश्यन्ते अतः सिद्धं क्रमान्यत्वात् परिणामान्यत्वं†। चित्तादीनां सर्व्वेषां‡ परिणममानानां केचित् धर्म्माः प्रत्यक्षेणैवोपलभ्यन्ते, यथा सुखादयः संस्थानादयश्च। केचिदेकान्तेनानुमानगम्याः, यथा धर्म्म-संस्कार-शक्तिप्रभृतयः§। धर्म्मिणश्चाभिन्नरूपतया|| सर्व्वत्रानुगमः॥ १५॥

इदानीमुक्तस्य संयमस्य विषयप्रदर्शनद्वारेण सिद्धीः प्रतिपादयितुमाह¶।

परिणामत्रयसंयमादतीतानागतज्ञानं॥ १६॥

धर्म्म-लक्षणावस्थाभेदेन यत् 'परिणामत्रयं उक्तं। तत्र 'संयमात्'

---

* पूर्व्व एव चेति H पुस्तकपाठः।

† अतः सिद्धं क्रमान्यत्वं क्रमान्यत्वात् परिणामान्यत्वमिति H पुस्तकपाठः।

‡ विषयादीनामिति H पुस्तकपाठः।

§ कर्म्म-संस्कार-शक्तिप्रभृतय इति B, E पुस्तकद्वयपाठः।

|| धर्म्मिणश्च भिन्नाभिन्नरूपतयेति H पुस्तकपाठः।

¶ प्रदर्शयितुमाहेति B, C, E पुस्तकेषु पाठः।

तस्मिन् विषये पूर्व्वोक्तस्य संयमस्य करणात्, 'अतीतानागतज्ञानं', योगिनः सम्यगाविर्भवति। इदमत्र तात्पर्य्यं। अस्मिन् धर्म्मिणि अयं धर्म्मः, इदं लक्षणं, इयमवस्था चानागतादध्वनः समेत्य वर्त्तमाने ऽध्वनि स्वं व्यापारं विधायातीतमध्वानं प्रविशतीत्येवं परिहृतविक्षेपतया यदा संयमं करोति, तदा यत् किञ्चिदतिक्रान्तमनुत्पन्नं वा तत्सर्व्वं योगी जानाति। यतश्चित्तस्य शुद्धसत्त्वप्रकाशरूपत्वात् सर्व्वार्थग्रहणसामर्थ्यमविद्यादिभिर्व्विक्षेपैरजस्रं परिछ्रियते। यदा तु तैस्तैरुपायैर्व्विक्षेपाः परिछ्रियन्ते, तदा निवृत्तमलस्येवादर्शस्य सर्व्वार्थग्रहणसामर्थ्यमेकाग्रतावशादाविर्भवति ॥ १६ ॥

सिद्ध्यन्तरमाह।

## शब्दार्थ-प्रत्ययानामितरेतराध्यासात् सङ्करस्तत्प्रविभागसंयमात् सर्व्वभूतरुतज्ञानं ॥ १७ ॥

'शब्दः' श्रोत्रेन्द्रियग्राह्यो नियतक्रमवर्णात्मा नियतैकार्थप्रतिपत्त्यवच्छिन्नः। यदि वा क्रमरहितः स्फोटात्मा ध्वनिः शास्त्रसंस्कृतबुद्धिग्राह्यः, उभयथापि पदरूपो वाक्यरूपश्च। तयोरेकार्थप्रतिपत्तौ सामर्थ्यात्। 'अर्थः' जाति-गुण-क्रियादिः। 'प्रत्ययः' ज्ञानं विषयाकारा बुद्धिवृत्तिः। एषां शब्दार्थज्ञानानां व्यवहारे 'इतरेतराध्यासात्' भिन्नानामपि बुद्ध्येकरूपतासम्पादनात् सङ्कीर्णत्वं। तथाहि गामानयेत्युक्तः कश्चिद्गोलक्षणमर्थं गोत्वजात्यवच्छिन्नं सास्नादिमत्पिण्डरूपं, शब्दं तद्वाचकं, ज्ञानञ्च तद्ग्राहकमभेदेनैवाध्यवस्यति। न त्वस्य गोशब्दो वाचकः, अयं गोशब्दस्य वाच्यः, तयोरिदं ग्राहकं ज्ञानमिति भेदेन व्यवहरति।

यथा हि कोऽयमर्थः, कोऽयं शब्दः, किमिदं ज्ञानमिति पृष्टः सर्व्वैकरूपमेवोत्तरं* ददाति† गौरिति। स यद्येकरूपतां न प्रतिपद्यते कथमेकरूपमुत्तरं प्रयच्छति। एतस्मिन्नवस्थिते‡ योऽयं 'प्रविभागः', इदं शब्दस्य तत्त्वं यद्वाचकत्वं नाम। इदमर्थस्य यद्वाच्यत्वं। इदं ज्ञानस्य यत् प्रकाशत्वं। इति प्रविभागं विधाय तस्मिन् प्रविभागे यः 'संयमङ्करोति, तस्य 'सर्व्वेषां भूतानां मृग-पशु-पक्षि-सरीसृपादीनां यत् 'रुतं' यः शब्दः। तत्र 'ज्ञानं', उत्पद्यते। अनेनाभिप्रायेणैतेन प्राणिनाऽयं शब्दः समुच्चारित इति सर्व्वं जानाति॥ १७॥

सिद्ध्यन्तरमाह।

## संस्कारसाक्षात्करणात् पूर्व्वजातिज्ञानं॥ १८॥

द्विविधाश्चित्तस्य§ वासनारूपाः 'संस्काराः। केचित् स्मृतिमात्रोत्पादनफलाः। केचिज्जात्यायुर्भोगलक्षणविपाकहेतवः यथा धर्म्माधर्म्माख्याः। तेषु संस्कारेषु यदा संयमं करोति, एवं मया सोऽर्थोऽनुभूतः, एवं मया सा क्रिया निष्पादितेति पूर्व्ववृत्तं सर्व्वमनुसन्दधानो भावनयैव प्रबोधकमन्तरेण उद्बुद्धसंस्कारः सर्व्वमतीतं स्मरति। क्रमेण साक्षात्कृतेषूद्बुद्धेषु संस्कारेषु|| 'पूर्व्वजन्मानुभूतानपि जात्यादीन् प्रत्यक्षेण पश्यति॥ १८॥

---

* सर्व्वत्रैकमेवोत्तरमिति E पुस्तकपाठः।

† वदतीति H पुस्तकपाठः।

‡ एतस्मिन् स्थिते इति H पुस्तकपाठः।

§ द्विविधास्तस्येति E पुस्तकपाठः।

|| साक्षात्कृतेषु संस्कारेष्विति B, C, E पुस्तकेषु पाठः।

सिद्ध्यन्तरमाह ।

**प्रत्ययस्य* परचित्तज्ञानं† ॥ १९ ॥**

'प्रत्ययस्य' परचित्तस्य‡ केनचिन्मुखरागादिना लिङ्गेन गृहीतस्य । यदा संयमं करोति तदा 'परकीयस्य चित्तस्य 'ज्ञानं', उत्पद्यते । सरागमस्य चित्तं वीतरागं वेति परचित्तगतानपि सर्व्वानेव धर्म्मान् जानातीत्यर्थः ॥ १९ ॥

अस्यैव परचित्तज्ञानस्य विशेषमाह ।

**न तत् सालम्बनं तस्याविषयीभूतत्वात्§ ॥ २० ॥**

'तस्य' परस्य, यच्चित्तं 'तत्', 'सालम्बनं' स्वकीयालम्बनेन सहितं, 'न', शक्यते ज्ञातुं । आलम्बनस्य केनचिल्लिङ्गेनाविषयीकृतत्वात् । लिङ्गाच्चित्तमात्रं परस्यावगतं, न तु नीलविषयमस्य चित्तं, पीतविषयमिति वा । यच्च न गृहीतं तत्र संयमस्य कर्त्तुमशक्यत्वात् । न भवति परचित्तस्य यो विषयस्तत्र ज्ञानं । तस्मात् परकीयचित्तं नालम्बनसहितं गृह्यते । तस्यालम्बनस्यागृहीतत्वात् । चित्तधर्म्माः पुनर्गृह्यन्ते एव । यदा तु किमनेनालम्बितमिति प्रणिधानं करोति तदा तत्संयमात् तद्विषयमपि ज्ञानं उत्पद्यते एव ॥ २० ॥

सिद्ध्यन्तरमाह ।

**कायरूपसंयमात्तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासंयोगेऽन्तर्द्धानं ॥ २१ ॥**

---

* प्रथमस्येति C पुस्तकपाठः ।

† एतत्सूत्रं काश्याम्मुद्रितयोगभाष्यपुस्तके नास्ति ।

‡ प्रथमं यस्य परचित्तस्येति C पुस्तकपाठः ।

§ प्रत्ययस्येत्यादिसूत्रं, न तत्सालम्बनमित्यादिसूत्रञ्च काश्याम्मुद्रितयोगभाष्यपुस्तके नास्ति ।

'कायः' शरीरं । तस्य 'रूपं' चक्षुर्ग्राह्यो गुणः । तस्मिन् काये इदं रूपमिति* 'संयमात्', तस्य रूपस्य चक्षुर्ग्राह्यत्वरूपा या 'शक्तिः', तस्याः 'स्तम्भे' भावनावशात् प्रतिबन्धे । 'चक्षुःप्रकाशासंयोगे', 'चक्षुषः,' 'प्रकाशः' सत्त्वधर्म्मः, तस्य 'असंयोगे' तद्ग्रहणस्य व्यापाराभावे । योगिनः 'अन्तर्द्धानं', भवति । न केनचिदसौ दृश्यत इत्यर्थः । एतेन शब्दाद्यन्तर्द्धानमुक्तं वेदितव्यं† । एतेन रूपाद्यन्तर्द्धानोपायप्रदर्शनेनैव शब्दादीनां श्रोत्रादिग्राह्याणामन्तर्द्धानं उक्तं भवति ॥ ॥ २१ ॥

सिद्ध्यन्तरमाह ।

## सोपक्रमं निरुपक्रमञ्च कर्म्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥ २२ ॥

आयुर्व्विपाकं यत् पूर्व्वकृतं 'कर्म्म', तद्द्विप्रकारं, 'सोपक्रमं' 'निरुपक्रमञ्च' । तत्र 'सोपक्रमं' यत् फलजननाय सहोपक्रमेण कार्य्यकारणाभिमुख्येन वर्त्तते । यथा उष्णप्रदेशे प्रसारितार्द्रवासः शीघ्रमेव शुष्यति । उक्तविपरीतं 'निरुपक्रमं' । यथा तदेवार्द्रवासः संवर्त्तित-

---

* तस्मिन्नास्त्यस्मिन् काये रूपमितीति F चिह्नितपुस्तकपाठः । तस्मिन्नस्त्यस्मिन् काये रूपमितीति H पुस्तकपाठः ।

† H चिह्नितपुस्तके 'एतेन शब्दाद्यन्तर्धानमुक्तं' इत्ययं पाठः सूत्राकारेण व्यवस्थापितः । परन्त्वयं न समीचीनः, उक्तपाठस्य काश्याम्मुद्रितयोगभाष्यपुस्तके भाष्यान्तर्गतत्वात् । तत्र वाचस्पतिमिश्रेण 'एतेनेति' इति भाष्यपाठं विवृत्य कायशब्दस्पर्शरसगन्धसंयमात् तद्ग्राह्यशक्तिस्तम्भे श्रोत्रत्वग्रसनघ्राणप्रकाशासंयोगे तदन्तर्धानमिति सूत्रमूहनीयं इति भाष्याभिप्रायस्य व्यञ्जितत्वात् । अस्मल्लब्धषट्सु पुस्तकेषु वृत्त्यन्तर्गतत्वाच्च ।

मनुष्यदेशे चिरेण भोक्ष्यते इति । अस्मिन् द्विविधे कर्मणि यः 'संयमं करोति, किं मम कर्म शीघ्रविपाकं किं चिरविपाकमित्येवं ध्यानदा-र्ढ्यात् 'अपरान्तज्ञानं', अस्योत्पद्यते। 'अपरान्तः' शरीरवियोगः। तस्मिन् 'ज्ञानं'। अमुष्मिन् काले अमुष्मिन् देशे मम शरीरवियोगो भविष्यतीति निःसंशयं जानाति। 'अरिष्टेभ्यो वा'। अरिष्टानि त्रि-विधानि आध्यात्मिकाधिदैविकाधिभौतिकभेदेन। तत्राध्यात्मिकानि पिहितकर्णः कौष्ठस्य वायोर्घोषं न शृणोति इत्येवमादीनि। आधि-भौतिकानि अकस्मात् विकृतपुरुषदर्शनादीनि । आधिदैविकानि अकाल एव* द्रष्टुमशक्यस्वर्गादिपदार्थदर्शनादीनि। तेभ्यः शरीर-वियोगकालं जानाति। यद्यप्ययोगिनामप्यरिष्टेभ्यः प्रायेण ज्ञानमु-त्पद्यते, तथापि तेषां सामान्याकारेण तत् संशयरूपं। योगिनां पुनर्नियतकालदेशतया प्रत्यक्षवदव्यभिचारि ॥ २२ ॥

परिकर्मनिष्पादिताः सिद्धीः† प्रतिपादयितुमाह ।

## मैत्र्यादिषु बलानि ॥ २३ ॥

'मैत्री-करुणा-मुदितोपेक्षासु यो विहितः संयमः तस्य 'बलानि', तासां मैत्र्यादीनां सम्बन्धीनि प्रादुर्भवन्ति । मैत्री-करुणा-मुदिता-स्तथाऽस्य प्रकर्षं गच्छन्ति, यथाऽसौ सर्व्वस्य मित्रत्वादिकं सम्प्रति-पद्यते ॥ २३ ॥

सिद्ध्यन्तरमाह ।

---

* अकाल एवेति H पुस्तकपाठः ।

† परिकर्म्मनिष्पन्दभूताः सिद्धीरिति E, C पुस्तकद्वयपाठः ।

बलेषु हस्तिबलादीनि ॥ २४ ॥

हस्त्यादिसम्बन्धिषु 'बलेषु', कृतसंयमस्य हस्त्यादिवद्बलानि आविर्भवन्ति। तदयमर्थः। यस्मिन् हस्तिबले वायुवेगे सिंहवीर्य्ये वा तन्मयभावेन* संयमं करोति, तत्तत्सर्व्वसामर्थ्ययुक्तं सत्त्वमस्य प्रादुर्भवतीत्यर्थः ॥ २४ ॥

सिद्ध्यन्तरमाह।

प्रवृत्त्यालोकन्यासात् सूक्ष्म-व्यवहित-विप्रकृष्टज्ञानं† ॥ २५ ॥

'प्रवृत्तिर्व्विषयवती ज्योतिष्मती च प्रागुक्ता। तस्या योऽसौ 'आलोकः' सात्त्विकप्रकाशप्रसरः,‡ तस्य निखिलेषु विषयेषु 'न्यासात्' तद्वासितानां विषयाणां भावनातः,§ स्वान्तःकरणेष्विन्द्रियेषु च प्रकृष्ट-शक्तिमापन्नेषु|| 'सूक्ष्मस्य' परमाण्वादेः, 'व्यवहितस्य' भूम्यन्तर्गतस्य निध्यादेः,¶ 'विप्रकृष्टस्य' मेर्व्वपरपार्श्ववर्त्तिनो रसायनादेः, 'ज्ञानं', उत्पद्यते ॥ २५ ॥

एतत्समानवृत्तान्तं सिद्ध्यन्तरमाह।

भुवनज्ञानं सूर्य्ये संयमात् ॥ २६ ॥

---

* तन्मयीभावेनेति H पुस्तकपाठः।

† सूक्ष्म-व्यवहित-विप्रकृष्टार्थज्ञानमिति E पुस्तकपाठः।

‡ सात्त्विकप्रकाश इति E पुस्तकपाठः।

§ भावनादिति H पुस्तकपाठः।

|| प्रकृष्टशक्तितामापन्नेष्विति H पुस्तकपाठः।

¶ निधानादेरिति H पुस्तकपाठः।

'सूर्य्ये' प्रकाशमये, यः संयमं करोति, तस्य सप्तसु भूर्भुवःस्वः-प्रभृतिषु लोकेषु यानि 'भुवनानि तत्सन्निवेशभाञ्जि पुराणि, तेषु यथावदस्य 'ज्ञानं', उत्पद्यते। पूर्व्वस्मिन् सूत्रे सात्त्विकप्रकाश आलम्बनतयोक्त इह तु भौतिक इति विशेषः ॥ २६ ॥

भौतिकप्रकाशान्तरालम्बनद्वारेणैव सिद्ध्यन्तरमाह।

## चन्द्रे ताराव्यूहज्ञानं ॥ २७ ॥

'ताराणां' ज्योतिषां, यः 'व्यूहः' विशिष्टसन्निवेशः, तस्मिन् 'चन्द्रे', कृतसंयमस्य 'ज्ञानं', उत्पद्यते। सूर्य्यप्रकाशेन हततेजस्कत्वात् ताराणां, सूर्य्यसंयमात्तज्ज्ञानं न शक्नोति भवितुमिति पृथगुपायोऽभिहितः ॥ २७ ॥

सिद्ध्यन्तरमाह।

## ध्रुवे तद्गतिज्ञानं ॥ २८ ॥

'ध्रुवे' निश्चले ज्योतिषां प्रधाने, कृतसंयमस्य तासां ताराणां या 'गतिः', प्रत्येकं नियतकाला नियतदेशा च तस्याः 'ज्ञानं', उत्पद्यते। इयं तारा अयं ग्रहः इयता कालेन इमं राशिमिदं नक्षत्रं यास्यति इति सर्व्वं जानातीत्यर्थः। इदं कालज्ञानफलमित्युक्तं भवति ॥ २८ ॥

बाह्याः सिद्धीः प्रतिपाद्यान्तराः सिद्धीः प्रतिपादयितुमुपक्रमते।

## नाभिचक्रे कायव्यूहज्ञानं ॥ २९ ॥

शरीरमध्यवर्त्ति 'नाभिसंज्ञकं यत् षोड़शारं 'चक्रं', तस्मिन् कृत-

संयमस्य योगिनः, 'कायगतो योऽसौ 'व्यूहः' विशिष्टं रस-मल-धातु-नाड्यादीनामवस्थानं, तच्च 'ज्ञानं', उत्पद्यते । इदमुक्तं भवति । नाभिचक्रं शरीरस्य मध्यवर्त्ति सर्व्वतः प्रसृतानां नाड्यादीनां मूलभूतं । अतस्तत्र कृतावधानस्य समग्रः सन्निवेशो यथावदाभाति* ॥ २९ ॥

सिद्ध्यन्तरमाह ।

**कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३० ॥**

कण्ठे गले कूपः 'कण्ठकूपः' जिह्वा-तन्त्वोरधस्तात्† कूपइव कूपो गर्त्ताकारप्रदेशः । प्राणादेर्यत्सम्पर्कात् क्षुत्पिपासादयः प्रादुर्भवन्ति । तस्मिन् कृतसंयमस्य योगिनः 'क्षुत्पिपासादयो निवर्त्तन्ते । घण्टिकाधस्तात् स्रोतसाप्याय्यमाने‡ तस्मिन् भाविते भवत्येवंविधा सिद्धिः ॥ ३० ॥

सिद्ध्यन्तरमाह ।

**कूर्म्मनाड्यां स्थैर्य्यं ॥ ३१ ॥**

कण्ठकूपस्याधस्तात् या 'कूर्म्माख्या नाड़ी, तस्यां कृतसंयमस्य, चेतसः 'स्थैर्य्यं', उत्पद्यते । तत्स्थानमनुप्रविष्टस्य चपलता§ न भवतीत्यर्थः । यदि वा कायस्य स्थैर्य्यमुत्पद्यते, न केनचित् स्पन्दयितुं शक्यत इत्यर्थः ॥ ३१ ॥

सिद्ध्यन्तरमाह ।

---

* यथावदाविर्भवतीति B, C, E पुस्तकपाठः

† जिह्वाचक्षोरधस्तादिति F पुस्तकपाठः ।

‡ स्रोतसा धार्य्यमाणे इति F पुस्तकपाठः ।

§ चलतेति C पुस्तकपाठः । चञ्चलतेति H पुस्तकपाठः ।

## मूर्द्धज्योतिषि सिद्धदर्शनं ॥ ३२ ॥

शिरःकपाले ब्रह्मरन्ध्राख्यं छिद्रं प्रकाशाधारत्वात् 'ज्योतिः'। यथा गृहाभ्यन्तरस्थस्य मणेः प्रसरन्ती प्रभा कुञ्चिकाविवरप्रदेशे संहन्यते*, तथा हृदयस्थः सात्त्विकः प्रकाशः प्रसृतस्तत्र सम्पिण्डितत्वं भजते। तत्र कृतसंयमस्य, ये द्यावा-पृथिव्योरन्तरालवर्त्तिनः 'सिद्धाः' दिव्याः पुरुषाः, तेषामितरप्राण्यदृश्यानां तस्य दर्शनं भवति। तान् पश्यति, तैश्च सम्भाष्यत इत्यर्थः ॥ ३२ ॥

सर्व्वज्ञत्वे उपायमाह।

## प्रातिभाद्वा सर्व्वं ॥ ३३ ॥

निमित्तानपेक्षं† मनोमात्रजन्यमविसंवादकं द्रागुत्पद्यमानं‡ ज्ञानं प्रतिभा। तस्यां संयमे क्रियमाणे 'प्रातिभं' विवेकख्यातेः पूर्व्वभावि तारकं ज्ञानं, उदेति§। यथोदेष्यतः सवितुः|| पूर्व्वं प्रभा प्रादुर्भवति। तद्वद्विवेकख्यातेः पूर्व्वं तारकं 'सर्व्वविषयं ज्ञानमाविर्भवति। तस्मिन् सति संयमान्तरानपेक्षः सर्व्वं जानातीत्यर्थः ॥ ३३ ॥

सिद्ध्यन्तरमाह।

## हृदये चित्तसंवित् ॥ ३४ ॥

'हृदयं' शरीरस्य प्रदेशविशेषः। तस्मिन्नधोमुखस्वल्पपुण्डरीकाभ्यन्तरे

---

* कुञ्चिताकारेव सर्व्वप्रदेशे संस्फुटत इति पा०।

† सर्व्वनिमित्तानपेक्षमिति H पुस्तकपाठः।

‡ झटित्युत्पद्यमानमिति D पुस्तकपाठः।

§ उत्पद्यत इति E पुस्तकपाठः।

|| यथोदेष्यति सवितरीति D पुस्तकपाठः।

अन्तःकरणसत्त्वस्य* स्थानं। तत्र कृतसंयमस्य स्व-परचित्तज्ञानमुत्पद्यते। स्वचित्तगताः सर्व्वा वासनाः परचित्तगतांश्च रागादीन् जानातीत्यर्थः॥ ३४॥

सिद्ध्यन्तरमाह।

**सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः† परार्थान्यस्वार्थसंयमात् पुरुषज्ञानं॥ ३५॥**

'सत्त्वं' प्रकाशसुखात्मकः प्राधानिकः परिणामविशेषः। 'पुरुषः' भोक्ता अधिष्ठातृरूपः‡। तयोर्भोग्य-भोक्तृत्वरूपत्वात् चेतनाचेतनत्वाच्च अत्यन्तासङ्कीर्णत्वं भिन्नत्वमित्यर्थः। तयोर्यः 'प्रत्ययस्याविशेषः' भेदेनाप्रतिभासनं,§ स भोगः। तस्मात् सत्त्वस्यैव कर्तृताप्रत्ययेन या सुख-दुःखसंवित् स 'भोगः' सत्त्वस्य स्वार्थनैरपेक्ष्येण 'परार्थः' पुरुषार्थः‖। तस्मादन्यो यः 'स्वार्थः' पुरुषस्वरूपमात्रालम्बनः, परित्यक्ताहङ्कारे सत्त्वे या चिच्छायासंक्रान्तिः, तत्र कृतसंयमस्य 'पुरुषविषयं 'ज्ञानं', उत्पद्यते। तदेवं रूपं स्वालम्बनं ज्ञानं सत्त्वनिष्ठं पुरुषो जानाति। न पुनः पुरुषो ज्ञाता ज्ञानस्य विषयभावमापद्यते, ज्ञेयत्वापत्तेः। ज्ञातृत्वज्ञेयत्वयोरत्यन्तविरोधात्॥ ३५॥

अस्यैव संयमस्य फलमाह।

---

* अन्तःकरणस्येति H पुस्तकपाठः।

† प्रत्ययाविशेषाद् भोग इति H, B, C चिह्नितपुस्तकपाठः। पण्डित-नामकपत्रे मुद्रितयोगसूत्रे पुरुषसत्त्वयोः इति पाठो दृश्यते।

‡ भोक्त्रधिष्ठातृरूप इति H पुस्तकपाठः।

§ अभेदेन प्रतिभासनमिति D पुस्तकपाठः।

‖ पुरुषार्थनिमित्त इति H पुस्तकपाठः।

ततः प्रातिभ-श्रावण-वेदनादर्शास्वादवार्त्ता जायन्ते ॥ ३६ ॥

'ततः' पुरुषसंयमादभ्यस्यमानात्, व्युत्थितस्यापि ज्ञानानि जायन्ते। तत्र 'प्रातिभं' पूर्वोक्तं ज्ञानं, तस्याविर्भवनात्* सूक्ष्मादिकमर्थं पश्यति । 'श्रावणं' श्रोत्रेन्द्रियजं ज्ञानं, तस्माच्च प्रकृष्टं दिव्यं दिवि भवं शब्दं जानाति । 'वेदना' स्पर्शेन्द्रियजं ज्ञानं, विद्यतेऽनयेति कृत्वा तान्त्रिक्या संज्ञया व्यवह्रियते। तस्मात् दिव्यस्पर्शविषयं ज्ञानं उपजायते। 'आदर्शः' चक्षुरिन्द्रियजं ज्ञानं, आसमन्तात् दृश्यते ऽनुभूयते रूपमनेनेति कृत्वा, तस्य प्रकर्षाद्दिव्यरूपज्ञानमुत्पद्यते । 'आस्वादः' रसनेन्द्रियजं ज्ञानं, आस्वाद्यते ऽनेनेति कृत्वा, तस्मिन् प्रकृष्टे दिव्यरससंविदुपजायते । 'वार्त्ता' गन्धसंवित्,† वृत्तिशब्देन तान्त्रिक्या परिभाषया घ्राणेन्द्रियमुच्यते, वर्त्तते गन्धविषय इति कृत्वा वृत्तेर्घ्राणेन्द्रियाज्जाता वार्त्ता गन्धसंवित्, तस्यां प्रकृष्यमाणायां दिव्यगन्धोऽनुभूयते ॥ ३६ ॥

एतेषां फलविशेषाणां विषयविभागमाह‡ ।

ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३७ ॥

'ते' प्राक्प्रतिपादिताः फलविशेषाः, 'समाधेः प्रकर्षं गच्छतः§

---

* तस्याविर्भवादिति H पुस्तकपाठः ।

† गन्धसंवित्तिरिति H पुस्तकपाठः ।

‡ विशेषविभागमाहेति D पुस्तकपाठः ।

§ समाधौ प्रकर्षं गच्छतीति D पुस्तकपाठः ।

'उपसर्गाः' उपद्रवा विघ्नाः* । तत्र हर्ष-विस्मयादिकारणेन समाधिः शिथिलीभवति । 'व्युत्थाने' पुनर्व्यवहारदशायां, विशिष्टफलदायकत्वात् 'सिद्धयः', भवन्ति ॥ ३७ ॥

सिद्ध्यन्तरमाह ।

**बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः† ॥ ३८ ॥**

व्यापकत्वादात्मचित्तयोर्नियतकर्म्मवशादेव शरीरान्तर्गतयोरेव भोक्तृ-भोग्यभावेन यत् संवेदनमुपजायते, स एव शरीरबन्ध इत्युच्यते। तत् यदा समाधिवशात् 'बन्धकारणं धर्म्माधर्म्माख्यं कर्म्म शिथिलीभवति, तानवमापद्यते । चित्तस्य च योऽसौ 'प्रचारः' हृदयप्रदेशादिन्द्रियद्वारेण विषयाभिमुख्येन प्रसरः, तस्य 'संवेदनं' ज्ञानं इयं चित्तवहा नाड़ी, अनया चित्तं वहति, इयञ्च प्राणादिवहाभ्यो नाड़ीभ्यो विलक्षणा इति स्वपरशरीरयोर्यदा सञ्चारं जानाति, तदा परकीयं शरीरं मृतं जीवच्छरीरं वा चित्तं सञ्चारद्वारेण प्रविशति। चित्तञ्च परशरीरे प्रविशत् इन्द्रियाण्यनुवर्त्तन्ते, मधुकरराजमिव मधुमक्षिकाः‡ । अतः परशरीरप्रविष्टो योगी स्वशरीरेणेव तेन§ व्यवहरति, यतो व्यापकयोश्चित्तपुरुषयोर्भोगसङ्कोचकारणं कर्म्म, तच्चेत् समाधिना क्षिप्तं तदा स्वातन्त्र्यात् सर्व्वत्रैव भोगनिष्पत्तिः ॥ ३८ ॥

---

* विघ्नकारिण इति H पुस्तकपाठः ।

† परशरीरप्रवेश इति D पुस्तकपाठः ।

‡ मक्षिका इति D पुस्तकपाठः ।

§ स्वशरीरवत्तेनेति "पण्डित"नामकपत्रपाठः ।

सिद्ध्यन्तरमाह ।

**उदानजयाज्जल-पङ्क-कण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३९ ॥**

समस्तानामिन्द्रियाणां तुषज्वालावद् या युगपदुत्थिता वृत्तिः सा जीवनशब्दवाच्या । तस्याः क्रियाभेदात् प्राणापानादिसंज्ञाभिर्व्यपदेशः । तत्र हृदयान्मुखनासिकाद्वारेण वायोः प्रणयनात् प्राण इत्युच्यते । नाभिप्रदेशात् पादाङ्गुष्ठपर्य्यन्तमपनयनादपानः । नाभिप्रदेशं परिवेष्ट्य समन्तान्नयनात् समानः । कृकाटिकादेशादाशिरोवृत्तेरुन्नयनादुदानः । व्याप्य नयनात् सर्व्वशरीरव्यापी व्यानः । 'उदानस्य', संयमद्वारेण 'जयात्', इतरेषां वायूनां निरोधादूर्द्ध्वगामित्वेन 'जले' महानद्यादौ, महति वा कर्द्दमे, तीक्ष्णेषु कण्टकेषु वा न मज्जति इति । लघुत्वात्तूलपिण्डवज्जलादौ निमज्जन्नपि* उद्गच्छतीत्यर्थः† ॥ ३९ ॥

सिद्ध्यन्तरमाह ।

**समानजयात् प्रज्वलनं‡ ॥ ४० ॥**

अग्निमावेष्ट्य व्यवस्थितस्य 'समानाख्यस्य वायोः 'जयात्' संयमेन वशीकारात्, निरावरणस्याग्नेरूर्द्ध्वत्वात्तेजसा ज्वलन्निव योगी प्रतिभाति ॥ ४० ॥

सिद्ध्यन्तरमाह ।

---

* मज्जित्वापीति D पुस्तकपाठः ।

† उपरिगच्छतीत्यर्थ इति E पुस्तकपाठः ।

‡ समानजयाज्ज्वलनमिति पाठः C चिह्नितपुस्तके काश्यां मुद्रितयोगभाष्यपुस्तके च वर्त्तते ।

**श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रं ॥ ४१ ॥**

'श्रोत्रं' शब्दग्राहकमाहङ्कारिकमिन्द्रियं। 'आकाशं' व्योम शब्द-तन्मात्रकार्य्यं। तयोः 'सम्बन्धः' देश-देशिभावलक्षणः। तस्मिन् कृतसंय-मस्य योगिनः 'दिव्यं श्रोत्रं' प्रवर्त्तते, युगपत् सूक्ष्म-व्यवहित-विप्रकृष्ट-शब्दग्रहणसमर्थं भवतीत्यर्थः ॥ ४१ ॥

सिद्ध्यन्तरमाह ॥

**कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चा-काशगमनं ॥ ४२ ॥**

'कायः' पाञ्चभौतिकं शरीरं। तस्य 'आकाशेन अवकाशदायकेन* यः 'सम्बन्धः', तत्र संयमं विधाय 'लघुनि 'तूलादौ वा 'समापत्तिः तन्मयीभावलक्षणा, तां विधाय प्राप्तात्यन्तलघुभावो योगी प्रथमं यथारुचि जले† सञ्चरन् क्रमेणोर्णनाभतन्तुजालेन सञ्चरमाण आदि-त्यरश्मिभिश्च विहरन् यथेष्टमाकाशे गच्छति ॥ ४२ ॥

सिद्ध्यन्तरमाह।

**बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशाव-रणक्षयः ॥ ४३ ॥**

शरीरात् 'बहिः', या मनसः शरीरनैरपेक्ष्येण 'वृत्तिः', सा 'महा-विदेहा', नाम विगतशरीराहङ्कारदार्ढ्यद्वारेणोच्यते। 'ततः' तस्यां

---

* अवकाशदानादिति H पुस्तकपाठः।

† भुवीति H पुस्तकपाठः।

कृतात् संयमात्, 'प्रकाशावरणक्षयः' सात्विकस्य चित्तस्य यः प्रकाशस्तस्य यदावरणं क्लेशकर्म्मादि तस्य क्षयः प्रविलयो भवति। अयमर्थः। शरीराहङ्कारे सति या मनसो बहिर्वृत्तिः सा कल्पितेत्युच्यते। यदा पुनः शरीराहङ्कारभावं* परित्यज्य स्वातन्त्र्येण मनसो वृत्तिः सा अकल्पिता, तस्यां संयमात् योगिनः सर्व्वे चित्तमलाः क्षीयन्ते ॥४३॥

तदेवं पूर्व्वान्तविषया अपरान्तविषया मध्यभवाश्च सिद्धीः प्रतिपाद्यानन्तरं भुवनज्ञानादिरूपा बाह्याः, कायव्यूहादिरूपा आभ्यन्तराः, परिकर्म्मनिष्पन्नभूताश्च 'मैत्र्यादिषु बलानि' इत्येवमाद्याः समाध्युपयोगिनीश्चान्तःकरणबहिःकरणलक्षणेन्द्रियभावाः, प्राणादिवायुभावाश्च सिद्धीश्चित्तदार्ढ्याय समाधेः समाश्वासोत्पत्तये प्रतिपाद्य इदानीं स्वदर्शनोपयोगिसबीज-निर्व्वीजसमाधिसिद्धये विविधोपायप्रदर्शनायाह।

**स्थूल-स्वरूप-सूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥४४॥**

पञ्चानां पृथिव्यादीनां भूतानां ये पञ्चावस्थाविशेषरूपा धर्म्माः स्थूलत्वादयः, तत्र कृतसंयमस्य 'भूतजयः', भवति, भूतानि वश्यान्यस्य भवन्तीत्यर्थः†। तथाहि भूतानां परिदृश्यमानं विशिष्टाकारवद्रूपं 'स्थूलं' 'स्वरूपं' चैषां यथाक्रमं कार्य्यं गन्ध-स्नेहोष्णता-प्रेरणावकाशदानलक्षणं। 'सूक्ष्मं' तु यथाक्रमं भूतानां कारणत्वेन‡ व्यवस्थितानि गन्धादितन्मात्राणि। 'अन्वयिनो गुणाः प्रकाश-प्रवृत्ति-स्थितिरूपतया

---

* शरीरादहंभावमिति C पुस्तकपाठः।

† भूतान्यवश्यं वश्यानीत्यर्थ इति H पुस्तकपाठः।

‡ कारणभेदेनेति C, H, B पुस्तकपाठः।

सर्व्वेष्वेवान्वयित्वेन समुपलभ्यन्ते। 'अर्थवत्त्वं' तेष्वेव गुणेषु भोगापवर्गसम्पादनाख्या शक्तिः। तदेवं भूतेषु पञ्चसु उक्तलक्षणावस्थापन्नेषु* प्रत्यवस्थं संयमं कुर्व्वन् योगी भूतजयी भवति। तद्यथा, प्रथमं स्थूलरूपे संयमं विधाय तदनु सूक्ष्मरूपे इत्येवं क्रमेण तस्य कृतसंयमस्य सङ्कल्पानुविधायिन्यो वत्सानुसारिण्य इव गावो भूतप्रकृतयो भवन्ति ॥ ४४ ॥

तस्यैव भूतजयस्य फलमाह।

**ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्म्मानभिघातश्च ॥ ४५ ॥**

'अणिमा' परमाणुरूपतापत्तिः। लघिमा तूलपिण्डवल्लघुत्वप्राप्तिः। गरिमा गुरुत्वप्राप्तिः। महिमा महत्त्वप्राप्तिः अङ्गुल्यग्रेण चन्द्रादिस्पर्शनशक्तिः। प्राकाम्यं इच्छानभिघातः। शरीरान्तःकरणेश्वरत्वं ईशित्वं। सर्व्वत्र प्रभविष्णुता वशित्वं, सर्व्वाण्येव भूतानि अनुरागित्वात्† तदुक्तं नातिक्रामन्ति। कामावसायित्वं सर्व्वत्र कामावसायः, यस्मिन् विषयेऽस्य कामः इच्छा भवति, तस्मिन् विषये योगिनोऽवसायो भवति, तं विषयं स्वीकारद्वारेणाभिलाषसमाप्तिपर्य्यन्तं नयतीत्यर्थः। तत्र ते अणिमाद्याः समाध्युपयोगिनो भूतजयात् योगिनः प्रादुर्भवन्ति। यथा परमाणुत्वं प्राप्तो

---

* उक्तलक्षणावस्थावच्छिन्नेष्विति H पुस्तकपाठः। उक्तलक्षणावस्थाभिन्नेष्विति F पुस्तकपाठः।

† अनुगामित्वादिति H पुस्तकपाठः।

वज्रादीनामप्यन्तः प्रविशति । एवं सर्व्वत्र योज्यं । एतेऽणिमा-द्योऽष्टौ गुणा महासिद्धय इत्युच्यन्ते । 'कायसम्पत्' वक्ष्यमाणा, तां प्राप्नोति । 'तद्धर्म्मानभिघातश्च' तस्य कायस्य ये धर्म्मा रूपादयस्तेषा-मभिघातो नाशो नास्य कुतश्चिदपि भवति । नास्य रूपमग्निर्दहति न च वायुः शोषयति इत्यादि योज्यं ॥ ४५ ॥

कायसम्पदमाह ।

**रूप-लावण्य-बल-वज्रसंहननत्वानि कायसम्पत् ॥ ४६ ॥**

'रूप-लावण्य-बलानि' प्रसिद्धानि । 'वज्रसंहननं' वज्रवत् कठिना संहतिरस्य शरीरे भवतीत्यर्थः । इति कायस्याविर्भूतगुणसम्पत् ॥ ४६ ॥

एवं भूतजयमभिधाय प्राप्तभूमिकस्येन्द्रियजयमाह ।

**ग्रहण-स्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥**

'ग्रहणं' इन्द्रियाणां विषयाभिमुखी वृत्तिः । 'स्वरूपं' सामान्येन प्रकाशकत्वं । 'अस्मिता' अहङ्कारानुगमः । 'अन्वयार्थवत्त्वे' पूर्व्ववत् । एतेषामिन्द्रियाणामवस्थापञ्चके पूर्व्ववत् संयमं कृत्वा 'इन्द्रियजयी भवति ॥ ४७ ॥

तस्य फलमाह ।

**ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥४८॥**

शरीरस्य मनोवदनुत्तमगतिलाभः* 'मनोजवित्वं' । कायनिरपे-

---

* मनोवदुत्तमगतिलाभ इति C पुस्तकपाठः ।

णानामिन्द्रियाणां वृत्तिलाभः 'विकरणभावः'। सर्व्ववशित्वं 'प्रधानजयः'। एताः सिद्धयो जितेन्द्रियस्य प्रादुर्भवन्ति। ताश्च अस्मिन्शास्त्रे मधुप्रतीका इत्युच्यन्ते। यथा मधुन एकदेशोऽपि स्वदते, एवं प्रत्येकमेताः सिद्धयः स्वदन्त इति मधुप्रतीकाः॥ ४८॥

इन्द्रियजयमभिधायान्तःकरणजयमाह।

## सत्त्व-पुरुषान्यताख्यातिमात्रस्य सर्व्वभावाधिष्ठातृत्वं सर्व्वज्ञातृत्वञ्च॥ ४९॥

तस्मिन् शुद्धे सात्त्विके परिणामे कृतसंयमस्य या सत्त्व-पुरुषयोरुत्पद्यते विवेकख्यातिः सा 'अन्यताख्यातिः',। गुणानां कर्तृत्वाभिमानशिथिलीभावस्वरूपात्तन्माहात्म्यात्* तत्रैव स्थितस्य योगिनः 'सर्व्वभावाधिष्ठातृत्वं', 'सर्व्वज्ञातृत्वञ्च', समाधेर्भवति। सर्व्वेषां गुणपरिणामानां भावानां स्वामिवदाक्रमणं 'सर्व्वभावाधिष्ठातृत्वं'। तेषामेव शान्तोदिताव्यपदेश्यधर्म्मित्वेन स्थितानां यथावद्विवेकज्ञानं 'सर्व्वज्ञातृत्वं'। एषा च अस्मिन् शास्त्रे परस्यां वशीकारसंज्ञायां प्राप्तायां विशोका नाम सिद्धिरित्युच्यते॥ ४९॥

क्रमेण भूमिकान्तरमाह।

## तद्वैराग्यादपि दोषवीजक्षये कैवल्यं॥ ५०॥

तस्यामपि विशोकायां सिद्धौ यदा वैराग्यमुत्पद्यते योगिनः, तदा तस्मात् 'दोषाणां' रागादीनां, यत् 'वीजं' अविद्या, 'तस्याः'

---

* कर्तृत्वाभिमानशिथिलीभावस्वरूपया तन्मयतयेति C पुस्तकपाठः।

'क्षये' निर्मूलने, 'कैवल्यं' आत्यन्तिकी दुःखनिवृत्तिः। पुरुषस्य गुणानामधिकारपरिसमाप्तेः* स्वरूपनिष्ठत्वं ॥ ५० ॥

अस्मिन्नेव समाधौ स्थित्युपायमाह।

**स्थान्युपनिमन्त्रणे‡ सङ्ग-स्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥ ५१ ॥**

चत्वारो योगिनो भवन्ति। तत्राभ्यासवान्प्रवृत्तमात्रज्योतिः प्रथमः। ऋतम्भरप्रज्ञः§ द्वितीयः। भूतेन्द्रियजयी तृतीयः। अतिक्रान्तभावनीयश्चतुर्थः। तत्र चतुर्थस्य समाधेः प्राप्तसप्तविधप्रान्तभूमिप्रज्ञस्य|| अन्यां मधुमतीसंज्ञां¶ भूमिं साक्षात्कुर्वतः 'स्थानिनो' देवा उपनिमन्त्रयितारो भवन्ति, दिव्यस्त्रीरसायनादिकमुपढौकयन्ति। तस्मिन् 'उपनिमन्त्रणे', नानेन 'सङ्गः', कर्त्तव्यः, नापि 'स्मयः',। सङ्गकरणे पुनर्विषयभोगे निपतति। स्मयकरणे कृतकृत्यमात्मानं मन्यमानो न समाधावुत्सहते। अतः सङ्ग-स्मययोस्तेन वर्ज्जनं कर्त्तव्यं ॥ ५१ ॥

अस्यामेव फलभूतायां विवेकख्यातौ पूर्व्वोक्तसंयमव्यतिरिक्तमुपायान्तरमाह।

---

* अधिकारसमाप्तेरिति B, C पुस्तकपाठः।

† स्वरूपप्रतिष्ठत्वमिति B, C पुस्तकपाठः।

‡ स्थान्युपनिमन्त्रणे इति H पुस्तकपाठः।

§ ऋताम्बरप्रज्ञ इति H पुस्तकपाठः।

|| प्राप्तसप्तविधभूमिप्रज्ञस्येति H पुस्तकपाठः।

¶ मधुमतीं प्रज्ञामिति H पुस्तकपाठः।

**क्षणतत्क्रमयोः* संयमाद्विवेकजं ज्ञानं† ॥५२॥**

'क्षणः' सर्व्वान्त्यः कालावयवः। यस्य कला प्रविभक्तुं न शक्यते। तथाविधानां कालक्षणानां यः 'क्रमः' पौर्व्वापर्य्येण परिणामः, तत्र 'संयमात्' प्रागुक्तं 'विवेकजं ज्ञानं', उत्पद्यते। अयमर्थः। अयं कालक्षणोऽस्मात् कालक्षणादुत्तरः, अयमस्मात् पूर्व्व इत्येवंविधे क्रमे कृतसंयमस्यात्यन्तसूक्ष्मेऽपि क्षणक्रमे यदा भवति साक्षात्कारः, तदा अन्यदपि सूक्ष्मं महदादि साक्षात्करोतीति विवेकज्ञानोत्पत्तिः॥५२॥

अस्यैव संयमस्य विषयविशेषोपक्षेपणायाह‡ ।

**जाति-लक्षण-देशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥५३॥**

पदार्थानां भेदहेतवः 'जाति-लक्षण-देशा भवन्ति। क्वचिद्भेदहेतुः 'जातिः', यथा गौरियं महिषीयमिति। जात्या तुल्ययोः 'लक्षणं', भेदहेतुः, यथा इयं कर्व्वुरा इयमरुणेति। जात्या लक्षणेन चाभिन्नयोर्भेदहेतुः 'देशः', दृष्टः, यथा तुल्यप्रमाणयोरामलकयोर्भिन्नदेशस्थितयोः। यत्र पुनर्भेदोऽवधारयितुं न शक्यते, यथैकदेशस्थितयोः शुक्लयोः पार्थिवयोः परमाण्वोः। तथाविधे विषये भेदाय कृतसंयमस्य यदा भेदेन ज्ञानमुपजायते, तदा तदभ्यासात् सूक्ष्माण्यपि तत्त्वानि भेदेन प्रतिपाद्यन्ते। एतदुक्तं भवति, यत्र केनचिदु-

---

* क्षणक्रमयोरिति H पुस्तकपाठः।

† विवेकज्ञानमिति H पुस्तकपाठः।

‡ विषयविवेकोपयोगमाहेति C पुस्तकपाठः।

पायेन भेदो नावधारयितुं शक्यस्तत्र संयमाद्भवत्येव भेदप्रतिपत्तिः सूक्ष्माणां तत्त्वानां ॥ ५३ ॥

उक्तस्य विवेकजन्यज्ञानस्य संज्ञां विषयं स्वभावञ्च व्याख्यातुमाह ।

**तारकं सर्व्वविषयं सर्व्वथाविषयमक्रमञ्चेति विवेकजं ज्ञानं ॥ ५४ ॥**

उक्तसंयमबलादन्त्यायां भूमिकायामुत्पन्नं 'ज्ञानं', 'तारकं', इति । तारयत्यगाधात् संसारपयोधेः* योगिनं इत्यान्वर्थिकया संज्ञया 'तारकं', इत्युच्यते । अस्य विषयमाह, 'सर्व्वविषयं' इति, सर्व्वाणि तत्त्वानि महदादीनि विषयोऽस्येति 'सर्व्वविषयं' । स्वभावश्चास्य सर्व्वथाविषयत्वं । सर्व्वाभिरवस्थाभिः स्थूल-सूक्ष्मादिभेदेन तैस्तैश्च परिणामैः सर्व्वेणाकारेणावस्थितानि तत्त्वानि विषयोऽस्येति 'सर्व्वथा विषयं' । स्वभावान्तरमाह । 'अक्रमञ्च', इति । निःशेषनानावस्था-परिणतद्व्येकभावग्रहणे† नास्य क्रमो विद्यते इति 'अक्रमं' । सर्व्वं करतलामलकवद्युगपत् पश्यतीत्यर्थः ॥ ५४ ॥

अस्माच्च विवेकजातात्तारकाख्यज्ञानात् किं भवतीत्याह ।

**सत्त्व-पुरुषयोः शुद्धिसाम्ये कैवल्यं ॥ ५५ ॥**

'सत्त्व-पुरुषौ' उक्तलक्षणौ । तयोः 'शुद्धिसाम्ये कैवल्यं' ।

---

* संसारसागरादिति H पुस्तकपाठः ।

† निःशेषनानावस्थापरिणतन्यात्मकभावग्रहणे इति H पुस्तकपाठः । निःशेषनानावस्थापरिणतन्यूनाधिकभावग्रहणे इति C पुस्तकपाठः ।

चित्तसत्त्वस्य सर्व्वथा कर्त्तृत्वाभिमाननिवृत्त्या स्वकारणेऽनुप्रवेशः शुद्धिः। पुरुषस्य शुद्धिरुपचरितभोगाभावः। इति द्वयोः समानायां शुद्धौ पुरुषस्य कैवल्यं उत्पद्यते, मोक्षो भवतीत्यर्थः।

तदेवमन्तरङ्गयोगाङ्गत्रयमभिधाय तस्य च संयमसञ्ज्ञां कृत्वा संयमस्य विषयप्रदर्शनार्थं परिणामत्रयमुपपाद्य संयमबलोत्पद्यमानाः पूर्व्वान्तापरान्त-मध्यभावाः सिद्धीरुपदर्श्य समाध्याश्वासोत्पत्तये बाह्या भुवनज्ञानादिरूपा आभ्यन्तराश्च कायव्यूहज्ञानादिरूपाः प्रदर्श्य समाध्युपयोगायेन्द्रियप्राणादिजयपूर्व्विकाः प्रदर्श्य परमपुरुषार्थसिद्धये यथाक्रममवस्थासहितभूतजयेन्द्रिय-सत्त्वजयोद्भवाश्च व्याख्याय विवेकज्ञानोत्पत्तये तांस्तान् उपायान् उपन्यस्य तारकस्य सर्व्वसमाध्यवस्थापर्य्यन्तभवस्य स्वरूपमभिधाय तत्समापत्तेः कृताधिकारस्य चित्तसत्त्वस्य स्वकारणानुप्रवेशात् कैवल्यमुत्पद्यते इत्यभिहितं इति व्याकृतो विभूतिपादः॥ ५५॥

इति महाराजाधिराजश्रीभोजदेवविरचितायां राजमार्त्तण्डाभिधायां पातञ्जलयोगशास्त्रसूत्रवृत्तौ विभूतिपादस्तृतीयः॥ ३॥

## अथ चतुर्थः पादः ।

यदाश्रयैव कैवल्यं विनोपायैः प्रजायते ।
तमेकमजमीशानं चिदानन्दमयं स्तुमः ॥

इदानीं विप्रतिपत्तिसमुत्यभ्रान्तिनिराकरणेन युक्त्या कैवल्यस्वरूपावस्थापनाय* कैवल्यपादोऽयमारभ्यते ।

तत्र याः पूर्व्वमुक्ताः सिद्धयस्तासां नानाविधजन्मादिकारणप्रतिपादनद्वारेणैवं बोधयति, एताः सिद्धयः सर्व्वाः पूर्व्वजन्माभ्यस्तसमाधिबलाज्जन्मादिनिमित्तमात्रमाश्रित्य प्रवर्त्तन्ते । ततश्चानेकभवसाध्यस्य समाधेर्न चतिरस्तीत्याश्वासोत्पादनाय समाधिसिद्धेश्च प्राधान्यख्यापनार्थं कैवल्योपयोगार्थञ्चाह ।

**जन्मौषधि-मन्त्र-तपः-समाधिजाः सिद्धयः ॥ १ ॥**

काश्चन 'जन्मनिमित्ता एव सिद्धयः । यथा पक्ष्यादीनामाकाशे गमनादयः । यथा वा कपिलमहर्षिप्रभृतीनां जन्मसमनन्तरमेव उपजायमाना ज्ञानादयः सांसिद्धिका गुणाः । 'ओषधिसिद्धयो यथा पातालादौ रसायनाद्युपभोगात् शरीरदार्ढ्यादयः । 'मन्त्रसिद्धिर्यथा मन्त्रजपात् केषाञ्चिदाकाशगमनादि । 'तपःसिद्धिर्यथा विश्वामित्रादीनां । 'समाधिसिद्धिर्यथा प्रागेव प्रतिपादिताः । एताः सिद्धयः पूर्व्वजन्मनि चयितक्लेशानामेवोपजायन्ते, तस्मात् समाधिसिद्धाविव

---

* कैवल्यस्वरूपस्थापनायेति C पुस्तकपाठः ।

अन्यासां सिद्धीनां समाधिरेव जन्मान्तराभ्यस्तः कारणं, मन्त्रादीनि तु निमित्तमात्राणि ॥ १ ॥

ननु नन्दीश्वरादीनां जात्यादिपरिणामः अस्मिन्नेव जन्मनि दृश्यते तत् कथं जन्मान्तराभ्यस्तसमाधेः कारणत्वमुच्यते* इत्याशङ्क्याह।

## जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥

योऽयमिहैव जन्मनि नन्दीश्वरादीनां 'जात्यादिपरिणामः', सः 'प्रकृत्यापूरात्'। पाश्चात्या एव हि प्रकृतयोऽस्मिन् जन्मनि विकारानापूरयन्ति जात्यन्तराकारेण परिणमन्ति॥ २ ॥

ननु धर्माऽधर्मादयस्तत्र क्रियमाणा उपलभ्यन्ते, तत् कथं प्रकृतीनामापूरणे कारणत्वमित्याह।

## निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

'निमित्तं' धर्मादि। तत् 'प्रकृतीनां', अर्थान्तरपरिणामे न 'प्रयोजकं'। न हि कार्य्येण कारणं प्रवर्त्तते। कुत्र तर्हि तस्य धर्मादेर्व्यापार इत्याह। 'वरणभेदस्तु ततः क्षेत्रिकवत्'। 'ततः' तस्मादनुष्ठीयमानाद्धर्म्मादेः, यत् 'वरणं' आवरकं अधर्म्मादिः, तस्यैव विरोधित्वात् 'भेदः' क्षयः, क्रियते, तस्मिन् प्रतिबन्धके क्षीणे प्रकृतयः स्वयमभिमतकार्य्याय प्रभवन्ति। दृष्टान्तमाह। 'क्षेत्रिकवत्', यथा क्षेत्रिकः

---

* कारणभाव उच्यत इति C पुस्तकपाठः।

कृषीवलः केदारात् केदारान्तरं जलं निनीषुः जलप्रतिबन्धक-वरणभेदमात्रं करोति, तस्मिन् भिन्ने जलं स्वयमेव प्रसरद्रूपं परिणामं गृह्णाति, न तु जलप्रसरणे तस्य कश्चित् प्रयत्नः। एवं धर्मादेर्बोद्धव्यं ॥ ३ ॥

यदा साक्षात्कृततत्त्वस्य योगिनो युगपत् कर्मफलोपभोगाया-त्मीयनिरतिशयविभूत्यनुभावात्* युगपदनेकशरीरनिर्मिमित्सा उप-जायते तदा कुतस्तानि चित्तानि प्रभवन्तीत्याह।

## निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

योगिनः स्वयं निर्मितेषु कायेषु यानि 'चित्तानि', तानि मूल-कारणात् 'अस्मितामात्रात्', एव तदिच्छया प्रसरन्ति, अग्नेर्विस्फुलिङ्गा इव युगपत् परिणमन्ति ॥ ४ ॥

ननु बहूनां चित्तानां भिन्नाभिप्रायत्वान्नैककार्य्यकर्तृत्वं स्यादि-त्याह।

## प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषां ॥ ५ ॥

तेषां 'अनेकेषां', चेतसां, 'प्रवृत्तिभेदे' व्यापारनानात्वे 'एकं', योगिनः 'चित्तं', 'प्रयोजकं' प्रेरकमधिष्ठातृत्वेन। तेन न भिन्नमतत्वं। अयमर्थः यथा आत्मीये शरीरे मनः चक्षुःपाण्यादीनि यथेच्छं प्रेरयत्यधिष्ठातृत्वेन, एवं कायान्तरेष्वपीति† ॥ ५ ॥

---

* निरतिशयविभूत्यनुभवायेति C पुस्तकपाठः।

† कार्य्यान्तरेष्वपीतीति B पुस्तकपाठः।

जन्मादिप्रभवत्वात् सिद्धीनां चित्तमपि तत्प्रभवं पञ्चविधमेव अतो जन्मादिप्रभवात् चित्तात् समाधिप्रभवस्य चित्तस्य वैलक्षण्यमाह।

## तत्र ध्यानजमनाशयं ॥ ६ ॥

'ध्यानजं' समाधिजं यच्चित्तं, तत् पञ्चसु मध्ये 'अनाशयं' कर्म्मवासनारहितं, इत्यर्थः ॥ ६ ॥

यथेतरचित्तेभ्यो योगिनश्चित्तं क्लेशादिरहितं विलक्षणं तथा कर्म्मापि विलक्षणमित्याह।

## कर्म्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषां ॥ ७ ॥

शुभफलप्रदं कर्म्म यागादि शुक्लं। अशुभफलप्रदं ब्रह्महत्यादि कृष्णं। उभयसङ्कीर्णं शुक्लकृष्णं। तत्र शुक्लं कर्म्म विचक्षणानां दानतपः-स्वाध्यायादिमतां पुरुषाणां। कृष्णं कर्म्म नारकानां। शुक्लकृष्णं मनुष्याणां। 'योगिनान्तु संन्यासवतां एवंविधकर्म्मविपरीतलक्षणं, तत् फलत्यागानुसन्धानेनैवानुष्ठानात् न किञ्चित् फलमारभते ॥ ७ ॥

अस्यैव कर्म्मणः फलमाह।

## ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानां ॥८॥

इह द्विविधाः कर्म्मवासनाः स्मृतिमात्रफलाः जात्यायुर्भोगफलाश्च। तत्र जात्यायुर्भोगफला एकानेकजन्मभवाः* इत्यनेन पूर्व्वमेव कृत-

* एकानेकजन्मफला इति F पुस्तकपाठः।

निर्वैयाः । यास्तु स्मृतिमात्रफलास्तासामभिव्यक्तिस्ततः कर्मणः । येन कर्मणा यादृक् शरीरमारब्धं देव-मनुष्य-तिर्य्यगादिभेदेन*, तस्य विपाकस्य याः 'अनुगुणा अनुरूपा वासनाः, तासामेव तस्मात् 'अभिव्यक्तिः', 'वासनानां', भवति । अयमर्थः येन कर्मणा पूर्व्वं देवतादिशरीरमारब्धं जात्यन्तरशतव्यवधाने पुनस्तथाविधस्यैव शरीरस्यारम्भे तदनुरूपा एव स्मृतिफला वासनाः प्रकटीभवन्ति । लोकान्तरेष्वेवार्थेषु तस्य स्मृत्यादयो जायन्ते । इतरास्तु सत्योऽपि न्यग्भूतास्तिष्ठन्ति† । न तस्यां दशायां नारकादिशरीरोपभोगभवा वासना अभिव्यक्तिमायान्ति ॥ ८ ॥

आसामेव वासनानां कार्य्यकारणभावानुपपत्तिमाशङ्क्य समर्थयितुमाह ।

## जाति-देश-काल-व्यवहितानामप्यानन्तर्य्यं स्मृति-संस्कारयोरेकरूपत्वात् ॥ ९ ॥

इह नानायोनिषु भ्रमतां संसारिणां काञ्चिद्योनिमनुभूय यदा योन्यन्तरसहस्रव्यवधानेन पुनस्तामेव योनिं प्रतिपद्यन्ते, तदा तस्यां पूर्व्वानुभूतायां योनौ तथाविधशरीरादिव्यञ्जकापेक्षया वासना याः प्रकटीभूता आसंस्तथाविधव्यञ्जकाभावात्तिरोभूताः पुनस्तथाविधव्यञ्जकशरीरादिलाभे प्रकटीभवन्ति । 'जाति-देश-कालव्यवधानेऽपि तासां स्वानुरूपस्मृत्यादिफलसाधने 'आनन्तर्य्यं' नैरन्तर्य्यमेव । कुतः ।

---

* देवमनुष्यतिर्य्यगादिभेदमिति H पुस्तकपाठः ।
† अव्यक्तसंज्ञास्तिष्ठन्तीति H पुस्तकपाठः ।

'स्मृतिसंस्कारयोरेकरूपत्वात्'। तथा हि अनुष्ठीयमानात् कर्म्मणश्चित्तसत्त्वे वासनारूपः संस्कारः समुत्पद्यते, स च स्वर्गनरकादीनां फलानामङ्कुरीभावः, कर्म्मणां वा यागादीनां शक्तिरूपतयावस्थानं, कर्त्तुर्व्वा तथाविधभोग्यभोक्तृत्वरूपं सामर्थ्यं, संस्कारात् स्मृतिः, स्मृतेश्च सुखदुःखोपभोगः, तदनुभवाच्च पुनरपि संस्कारस्मृत्यादयः। एवञ्च यस्य स्मृतिसंस्कारादयो भिन्नास्तस्यानन्तर्य्याभावे दुर्लभः कार्य्यकारणभावः। अस्माकन्तु यदानुभव एव संस्कारीभवति, संस्कारश्च स्मृतिरूपतया परिणमते, तदा एकस्यैव चित्तस्याऽनुसन्धातृत्वेन स्थितत्वात् कार्य्यकारणभावो न दुर्घटः॥ ९॥

भवत्वानन्तर्य्यं कार्य्यकारणभावश्च वासनानां। यदा तु प्रथममेवानुभवः प्रवर्त्तते तदा किं वासनानिमित्त उत निर्न्निमित्त इति शङ्कां व्यपनेतुमाह।

## तासामनादित्वमाशिषो नित्यत्वात्॥ १०॥

'तासां' वासनानां। 'अनादित्वं' न विद्यते आदिर्यस्य तस्य भावस्तत्त्वं। आसामादिर्नास्तीत्यर्थः। कुतः* 'आशिषो नित्यत्वात्'। येयमाशीर्महामोहरूपा सदैव सुखसाधनानि मे भूयासुः मा कदाचन तैर्मम वियोगो भूयादिति यः सङ्कल्पविशेषो वासनानां कारणं तस्य नित्यत्वादनादित्वादित्यर्थः। एतदुक्तं भवति कारणस्य सन्निहितत्वादनुभवसंस्कारादीनां कार्य्याणां प्रवृत्तिः केन वार्य्यते, अनुभव-

---

* कुत इत्यत आहेति F पुस्तकपाठः।

संस्काराद्यनुविद्धं संकोच-विकासधर्मि चित्तं तत्तदभिव्यञ्जकविपाक-लाभात् तत्फलरूपतया परिणमत इत्यर्थः ॥ १० ॥

आसामानन्त्यात् हानं कथं सम्भवतीत्याशङ्क्य हानोपायमाह ।

## हेतु-फलाश्रयालम्बनैः सङ्गृहीतत्वादेषामभावे तदभावः ॥ ११ ॥

वासनानामनुभवो हेतुः, तस्यानुभवस्य रागादयः, तेषामविद्या इति साक्षात् पारम्पर्य्येण च 'हेतुः' । 'फलं' शरीरादि स्मृत्यादि च । 'आश्रयः' बुद्धितत्त्वं । 'आलम्बनं' यदेवानुभवस्य तदेव वासनानां । अतस्तैः 'हेतु-फलाश्रयालम्बनैः', अनन्तानामपि वासनानां 'संगृहीतत्वात्', तेषां हेत्वादीनां 'अभावे' ज्ञान-योगाभ्यां दग्धबीजकल्पत्वे विहिते, निर्मूलत्वात् न वासनाः प्ररोहन्ति* न कार्य्यमारभन्त इति तासां 'अभावः' ॥ ११ ॥

ननु प्रतिक्षणं चित्तस्य नश्वरत्वोपलब्धेर्वासनानां तत्फलानाञ्च कार्य्यकारणभावेनायुगपद्भावित्वात् भेदे कथमेकत्वमित्याशङ्क्य एकत्व-समर्थनायाह ।

## अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्म्माणां ॥ १२ ॥

इह अत्यन्तमसतां भावानामुत्पत्तिर्न युक्तिमती तेषां सत्त्वसम्बन्धायोगात् । नहि शशविषाणादीनां क्वचिदपि सत्त्वसम्बन्धो दृष्टः । निरुपाख्ये च कार्य्ये किमुद्दिश्य कारणानि प्रवर्त्तेरन् । नह्यसत्त्वं विष-

* प्ररोहमुपयान्तीति B, F पुस्तकद्वयपाठः ।

थमालोच्य कश्चित् प्रवर्त्तते। सतामपि विरोधान्नाभावसम्बन्धोऽस्ति। यत् स्वरूपेण लब्धसत्ताकं तत् कथं निरुपाख्यतामभावस्वरूपतान्न भजते, न विरुद्धं रूपं स्वीकरोतीत्यर्थः। तस्मात् सतां नाशासम्भवात् असतासोत्पत्त्यभावात् तैस्तैर्धर्मैर्विपरिणममानो धर्मी सदैकरूप एवावतिष्ठते। धर्मास्तु ते त्र्यध्वकत्वेन व्यवस्थिताः*। स्वस्मिन् स्वस्मिन्नध्वनि व्यवस्थिताः स्वरूपं त्यजन्ति,† वर्त्तमानेऽध्वनि व्यवस्थिताः केवलं भोग्यतां भजन्ते। तस्माद्धर्माणामेव अतीतानागताद्यध्वभेदस्तेनैव च रूपेण कार्य्यकारणभावोऽस्मिन् दर्शने प्रतिपद्यते, तस्मादपवर्गपर्य्यन्तमेकमेव चित्तं धर्म्मितयानुवर्त्तमानं न निह्नोतुं पार्य्यते॥ १२॥

त एते धर्म्म-धर्म्मिणः किंरूपा इत्याह।

## ते व्यक्त-सूक्ष्मा गुणात्मानः॥ १३॥

य एते धर्म-धर्म्मिणः प्रोक्ताः 'ते', 'व्यक्त-सूक्ष्मभेदेन व्यवस्थिताः। 'गुणाः' सत्त्वरजस्तमोरूपाः। तदात्मानस्तत्स्वभावास्तत्परिणामरूपा इत्यर्थः। यतः सत्त्वरजस्तमोभिः सुखदुःखमोहरूपैः सर्व्वासां वाह्याभ्यन्तरभिन्नानां भावव्यक्तीनामन्वयाऽनुगमो दृश्यते, यच्च यदन्वयि तत् तत्परिणामरूपं दृष्टं। यथा घटादयो मृदन्विता मृत्परिणामरूपाः॥ १३॥

यद्येते त्रयो गुणाः सर्व्वत्र मूलकारणं, कथमेको धर्मीति व्यपदेशः इत्याशङ्क्याह।

---

* त्र्यध्वकत्वेन त्रैकालिकत्वेन व्यवस्थिता इति F पुस्तकपाठः।

† न स्वरूपं त्यजन्तीति C पुस्तकपाठः।

## परिणामैकत्वाद्वस्तुतत्त्वं ॥ १४ ॥

यद्येते त्रयो गुणास्तथापि तेषामङ्गाङ्गिभावगमनलक्षणो यः 'परिणामः' क्वचित् सत्त्वमङ्गि क्वचिद्रजः क्वचिच्च तम इत्येवंरूपः, तस्य 'एकत्वात्', 'वस्तुनः, 'तत्त्वं' एकत्वमुच्यते। यथेयं पृथिवी अयं वायुरित्यादि ॥ १४ ॥

ननु विज्ञानव्यतिरिक्ते सत्यर्थे वस्त्वेकमनेकं वा वक्तुं युज्यते यदा विज्ञानमेव वासनावशात् कार्य्यकारणभावेनावस्थितं तथा तथा प्रतिभाति, तदा कथमेतच्छक्यते वक्तुमित्याशङ्क्याह।

## वस्तुसाम्ये चित्तभेदात्तयोर्व्विविक्तः पन्थाः ॥ १५ ॥

'तयोः' ज्ञान-ज्ञेययोः, 'विविक्तः पन्थाः' विविक्तो मार्गभेद इति यावत्। कथं? 'वस्तुसाम्ये चित्तभेदात्', समाने वस्तुनि स्त्र्यादावुपलभ्यमाने नानाप्रमातॄणां चित्तभेदः सुख-दुःख-मोहरूपतया समुपलभ्यते। तथाहि एकस्यां रूपलावण्यवत्यां योषिति उपलभ्यमानायां सरागस्य सुखमुत्पद्यते, सपत्न्यास्तु द्वेषः, परिव्राजकादेर्घृणेत्येकस्मिन् वस्तुनि नानाविधचित्तोदयात् कथञ्चिन्न कार्य्यत्वं वस्तुनः। एकचित्तकार्य्यत्वे वस्तु एकरूपतयैवावभासेत। किञ्च चित्तकार्य्यत्वे वस्तुनः यस्य चित्तस्य यद् वस्तु कार्य्यं, तस्मिन् अर्थान्तरव्यासक्ते चित्ते तद्वस्तु न किञ्चित् स्यात्। भवत्विति चेन्न। तदेव कथमन्यैर्बहुभिरुपलभ्यते। उपलभ्यते च तस्मान्न चित्तकार्य्यं। अथ युगपद्बहुभिः सोऽर्थः क्रियते तदा बहुनिर्म्मितस्य तस्य* एकनिर्म्मितादवैलक्षण्यं स्यात्। यदि

---

* कार्य्यस्येति C पुस्तकपाठः।

वैलक्षण्यं नेष्यते तदा कारणभेदे सति कार्य्यभेदस्याभावे निर्हेतुक-मेकरूपं वा जगत् स्यात् । एतदुक्तं भवति सत्यपि भिन्ने कारणे यदि कार्य्यस्याभेदः तदा समयं जगन्नानाविधकारणजन्यमेकरूपं स्यात्, कारणभेदाननुगमात् स्वातन्त्र्येण निर्हेतुकं वा स्यात् । यद्येवं कथं तेन त्रिगुणात्मनार्थेनैकस्यैव प्रमातुः सुख-दुःख-मोहम-यानि ज्ञानानि जन्यन्ते । मैवं । यथा अर्थस्त्रिगुणस्तथा चित्तमपि त्रिगुणं, तस्य च अर्थप्रतिभासोत्पत्तौ धर्म्मादयः* सहकारिकारणं । तदुद्भवाभिभववशाच्चित्तस्य तेन तेन रूपेणाभिव्यक्तिः । तथा च कामुकस्य सन्निहितायां योषिति धर्म्मसहकृतं चित्तं सत्त्वस्याङ्गितया परिणममानं सुखमयं भवति । तदेवाधर्म्मसहकारि रजसोऽङ्गितया दुःखरूपं सपत्नीमात्रस्य भवति । तीव्राधर्म्मसहकारितया तमसो-ऽङ्गित्वेन कोपनायाः सपत्न्या मोहमयं भवति । तस्माद्विज्ञानव्यति-रिक्तोऽस्ति ग्राह्योऽर्थः† । तदेवं विज्ञानार्थयोः‡ तादात्म्यविरोधान्न कार्य्यकारणभावः । कारणाभेदे सत्यपि कार्य्यभेदे अतिप्रसङ्गादिति ज्ञानाद्व्यतिरिक्तत्वमर्थस्य व्यवस्थापितं ॥ १५ ॥

यद्येकं ज्ञानं प्रकाशकत्वात् ग्रहणस्वभावमर्थस्य प्रकाश्यत्वाद्ग्राह्य-स्वभावः तत् कथं युगपत् सर्व्वानर्थान्न गृह्णाति न स्मरति चेत्याशङ्क्य परिहारं कर्त्तुमाह ।

---

* धर्म्माधर्म्मादय इति F पुस्तकपाठः ।

† बाह्यार्थ इति C पुस्तकपाठः ।

‡ विज्ञानवस्तुनोरिति F पुस्तकपाठः ।

## तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातं ॥ १६ ॥

'तस्य' अर्थस्य, 'उपरागादाकारसमर्पणात्, चित्ते वाह्यं 'वस्तु', 'ज्ञातमज्ञातञ्च भवति । अयमर्थः, सर्व्वः पदार्थः स्वात्मलाभे सामग्रीमपेक्षते, नीलादिज्ञानञ्चोपजायमानं इन्द्रियप्रणालिकया समागतमर्थोपरागं सहकारिकारणत्वेनापेक्षते व्यतिरिक्तस्यार्थस्य सम्बन्धाभावाद्ग्रहीतुमशक्यत्वात् । ततश्च येनैवार्थेन तस्य ज्ञानस्य स्वरूपोपरागः कृतः तमेवार्थं तज्ज्ञानं व्यवहारयोग्यतां नयति । ततश्च सोऽर्थो ज्ञात इत्युच्यते । येन चाकारो न समर्पितः सोऽज्ञातत्वेन व्यवह्रियते । यस्मिंश्चानुभूतेऽर्थे सादृश्यादिरर्थः संस्कारमुद्बोधयन् सहकारिकारणतां प्रतिपद्यते तस्मिन्नेवार्थे स्मृतिरुपजायते इति सर्व्वत्र न ज्ञानं, नापि सर्व्वत्र स्मृतिरिति न कश्चिद्विरोधः* ॥ १६ ॥

यद्येवं प्रमातापि पुरुषो यस्मिन् काले नीलं संवेदयते न तस्मिन् काले पीतं अतश्चित्तवत्तस्यापि कदाचिद्ग्रहीतृरूपत्वादाकारग्रहणे परिणामित्वं प्राप्तमित्याशङ्क्य परिहर्त्तुमाह ।

## सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामात्† ॥ १७ ॥

या एताः 'चित्तस्य', प्रमाण-विपर्य्ययादिरूपाः 'वृत्तयः', ताः 'तत्प्रभोः' तस्य चित्तस्य ग्रहीतुः, 'पुरुषस्य', 'सदा' सर्व्वकालमेव, 'ज्ञाताः, तस्य चिद्रूपतया 'अपरिणामात्' परिणामित्वाभावादित्यर्थः ।

---

* कश्चिद्विरोध इति F पुस्तकपाठः ।

† पुरुषस्यापरिणामित्वादिति काशीमुद्रितभाष्यपुस्तकपाठः ।

यद्यसौ परिणामी स्यात्तदा परिणामस्य कादाचित्कत्वात्तासां चित्त-वृत्तीनां सदा ज्ञातत्वं नोपपद्यते। अयमर्थः, पुरुषस्य चिद्रूपस्य सदैवाधिष्ठातृत्वेन व्यवस्थितस्य यदन्तरङ्गं निर्मलं सत्त्वं तस्यापि सदैवावस्थितत्वात् तद्येन येनार्थेनोपरक्तं भवति तथाविधस्यार्थस्य सदैव चिच्छायासंक्रान्तिसद्भावः, तस्यां सत्यां सिद्धं सदा ज्ञातृत्वमिति न कदाचित्परिणामित्वाशङ्का॥ १७॥

ननु चित्तमेव सत्त्वोत्कर्षाद्यदि प्रकाशकं तदा स्वपरप्रकाशरूपत्वात्* आत्मानमर्थञ्च प्रकाशयतीति तावतैव व्यवहारसमाप्तिः किं ग्रहीचन्तरेण इत्याशङ्कामपनेतुमाह।

## न तत् स्वाभासं दृश्यत्वात्॥ १८॥

'तत्' चित्तं, 'स्वाभासं' स्वप्रकाशं, न भवति, पुरुषवेद्यं भवतीति यावत्। कुतः 'दृश्यत्वात्', यत् किल दृश्यं तद्द्रष्टृवेद्यं, यथा घटादि। दृश्यञ्चं चित्तं तस्मान्न स्वाभासं॥ १८॥

ननु साध्याविशिष्टोऽयं हेतुः दृश्यत्वमेव चित्तस्यासिद्धं, किञ्च स्वबुद्धिसंवेदनद्वारेण पुरुषाणां हिताहितप्राप्तिपरिहाररूपा वृत्तयो दृश्यन्ते, तथाहि क्रुद्धोऽहं भीतोऽहं न मे राग इत्येवमाद्या संविद्बुद्धेरसंवेदनान्नोपपन्नेत्याशङ्कां निरसितुमाह।

## एकसमये चोभयानवधारणं॥ १९॥

अर्थस्य संविन्निरिदन्तया व्यवहारयोग्यतापादनं अयमर्थः सुख-

---

* स्वपरप्रकाशकत्वादिति C पुस्तकपाठः।

† वेद्यत्वेति C पुस्तकपाठः।

हेतुर्दुःखहेतुर्वेति । बुद्धेश्च संवित् अहमित्येवमाकारेण सुखदुःख-रूपतया व्यवहारक्षमतापादनं । एवंविधस्य व्यापारद्वयमर्थप्रत्यक्षकाले न युगपत्कर्त्तुं शक्यं विरोधात् । न हि विरुद्धयोर्व्यापारयोर्युगपत्सम्भ-वोऽस्ति । अतः ‘एकस्मिन् काले, ‘उभयस्य’ स्वरूपस्यार्थस्य च, अवधारयितुमशक्यत्वान्न चित्तं स्वप्रकाशकमित्युक्तं भवति । किञ्चैवं-विधव्यापारद्वयं निष्पाद्य फलद्वयस्यासंवेदनाद्बहिर्मुखतयैवार्थनिष्ठमेव चित्तस्य स्वयमसंवेदनात्* अर्थनिष्ठमेव फलं न स्वनिष्ठमित्यर्थः ॥१८॥

ननु माभूद्बुद्धेः स्वयं ग्रहणं बुद्ध्यन्तरेण तु भविष्यति इत्या-शङ्क्याह ।

**चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥२०॥**

यदि हि बुद्धिर्बुद्ध्यन्तरेण संवेद्यते तदा सापि बुद्धिः स्वयमबुद्धा बुद्ध्यन्तरं प्रकाशयितुमसमर्थेति तस्या ग्राहकं बुद्ध्यन्तरं कल्पनीयं तस्या अप्यन्यदित्यनवस्थानात् पुरुषायुषेणाप्यर्थप्रतीतिर्न स्यात् । नहि प्रतीतावप्रतीतायामर्थः प्रतीतो भवति । स्मृतिसङ्करश्च प्राप्नोति । रूपे रसे वा समुत्पन्नायां बुद्धौ तद्ग्राहिकाणामनन्तानां बुद्धीना-मुत्पत्तेर्बुद्धिजनितैः संस्कारैर्यदा बह्व्यः स्मृतयः क्रियन्ते, तदार्थबुद्धे-रपर्य्यवसानाद् बुद्धिस्मृतीनां युगपदुत्पत्तेः कस्मिन्नर्थे स्मृतिरियमु-त्पन्नेति ज्ञातुमशक्यत्वात् ‘स्मृतिसङ्करः’,† स्यादियं रूपस्मृतिरियं रसस्मृतिरिति न ज्ञायेत ॥ २० ॥

---

* स्वरूपसंवेदनाभावादिति C पुस्तकपाठः ।

† स्मृतीनां सङ्कर इति F पुस्तकपाठः ।

ननु बुद्धेः स्वप्रकाशत्वाभावे बुद्ध्यन्तरेण चासंवेदने कथमयं विषयसंवेदनरूपो व्यवहार इत्याशङ्क्य स्वसिद्धान्तमाह।

चितेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनं ॥२१॥

पुरुषश्चिद्रूपत्वात् 'चितिः, सा 'अप्रतिसङ्क्रमा, न विद्यते प्रतिसङ्क्रमोऽन्यत्र गमनं यस्याः सा तथोक्ता अन्येनासङ्कीर्णेति यावत्। यथा गुणा अङ्गाङ्गिभावलक्षणे* परिणामे अङ्गिनं गुणिनमुपसंक्रामन्ति तद्रूपतामिवापद्यन्ते, यथा वा लोके परमाणवः प्रसरन्तो विषयमारोपयन्ति नैवं चितिशक्तिः, तस्याः सर्व्वदैकरूपतया स्वप्रतिष्ठितत्वेन व्यवस्थितत्वात्। अतस्तत्सन्निधाने यदा बुद्धिस्तदाकारतामापद्यते चेतनेवोपजायते, बुद्धिवृत्तिप्रतिसङ्क्रान्ता च यदा चिच्छक्तिः बुद्धिवृत्त्यवच्छिन्नतया† संवेद्यते तदा बुद्धेः स्वस्यात्मनो वेदनं सम्भवतीत्यर्थः॥ २१ ॥

इत्थं स्वसंविदितं चित्तं सर्व्वार्थग्रहणसामर्थ्येन सकलव्यवहारक्षमं भवतीत्याह।

द्रष्टृ-दृश्योपरक्तं चित्तं सर्व्वार्थं ॥ २२ ॥

'द्रष्टा' पुरुषः, तेन 'उपरक्तं' तत्सन्निधाने तद्रूपतामिवापन्नं,‡ 'दृश्योपरक्तं' गृहीतविषयाकारपरिणामं, यदा भवति तदा तदेव सर्व्वार्थग्रहणसमर्थं जायते। यथा निर्म्मलस्फटिकदर्पणाद्येव प्रतिबिम्बग्रहणसमर्थं एवं रजस्तमोभ्यामनभिभूतं सत्त्वं शुद्धत्वाच्चिच्छाया-

---

* अङ्गाङ्गिभावगमनलक्षणे इति F पुस्तकपाठः।

† बुद्धिवृत्तिविशिष्टतया इति F पुस्तकपाठः।

‡ तद्रूपतामिव प्राप्तमिति F पुस्तकपाठः।

ग्रहणसमर्थं भवति, न पुनरशुद्धत्वाद्रजस्तमसी। तत् न्यग्भूत-रजस्तमोरूपमलितया सत्त्वं निश्चलप्रदीपशिखाकारं सदैवैकरूपतया परिणममाणं चिच्छायाग्रहणसामर्थ्यादामोक्षप्राप्तेरवतिष्ठते। यथा अयस्कान्तसन्निधाने लौहस्य चलनमाविर्भवति, एवं चिद्रूपसन्निधाने सत्त्वस्याभिव्यङ्ग्यमभिव्यज्यते चैतन्यं। अत एवास्मिन् दर्शने द्वे चिच्छक्ती नित्योदिताऽभिव्यङ्ग्या च। नित्योदिता चिच्छक्तिः पुरुषः। तत्सन्नि-धानादभिव्यक्तचैतन्यं सत्त्वमभिव्यङ्ग्या चिच्छक्तिः। तदत्यन्तं सन्निहित-त्वादन्तरङ्गं पुरुषस्य भोग्यतां प्रतिपद्यते। तदेव शान्तब्रह्मवादिभिः साङ्ख्यैः पुरुषस्य परमात्मनोऽधिष्ठेयं कर्म्मानुरूपसुखदुःखभोक्तृतया व्यप-दिश्यते। यत्त्वत्यन्तानुद्रिक्तत्वादेकस्यापि गुणस्य, कदाचित्कस्यचिदङ्गि-त्वात्त्रिगुणं प्रतिक्षणं परिणममानं सुख-दुःख-मोहात्मकं न निर्म्मलं, तत्तस्मिन् कर्म्मात्मरूपे शुद्धे सत्त्वे स्वाकारसमर्पणद्वारेण संवेद्यता-मापादयति। तच्छुद्धमाद्यं चित्तसत्त्वमेकतः प्रतिसंक्रान्तचिच्छायमन्यतो गृहीतविषयाकारेण चित्तेनोपढौकितस्वाकारं चित्संक्रान्तिबलाच्चेत-नायमानं वास्तवचैतन्याभावेऽपि सुख-दुःखरूपभोगमनुभवति। स एव भोगोऽत्यन्तसान्निध्येन विवेकाग्रहणाद्भोक्तुरपि पुरुषस्य भोग इति व्यप-दिश्यते। अनेनाभिप्रायेण विन्ध्यवासिनोक्तं। "सत्त्वतप्यत्वमेव पुरुष-तप्यत्वं" इति। अन्यत्रापि "बिम्बे प्रतिबिम्बमानच्छायासदृशच्छायान्त-रोद्भवः प्रतिबिम्बशब्देनोच्यते। एवं सत्त्वेपि पौरुषेयचिच्छायासदृश-चिच्छायान्तराभिव्यक्तिः प्रतिसङ्क्रान्तिशब्दार्थः"*। ननु प्रतिबिम्बनं

---

* प्रतिबिम्बशब्दार्थं इति C पुस्तकपाठः। चिच्छायाशब्दार्थं इति H पुस्तकपाठः।

नामानिर्मलस्य नियतपरिणामस्य* निर्मले दृष्टं, यथा मुखस्य दर्पणे। अत्यन्तनिर्मलस्य व्यापकस्य अपरिणामिनः पुरुषस्य तस्मादनिर्मले सत्त्वे कथं प्रतिबिम्बनमुपपद्यते। उच्यते। प्रतिबिम्बनस्य स्वरूपमनवगच्छता भवतेदमभ्यधायि। येव सत्त्वगताया अभिव्यङ्ग्याया चिच्छक्तेः पुरुषस्य सान्निध्यादभि[illegible] सैव प्रतिबिम्बनमुच्यते। यादृशी पुरुषगता चिच्छक्तिस्तच्छाय[illegible] तस्याविर्भवति। यदप्युक्तमत्यन्तनिर्मलः पुरुषः कथमनिर्मले सत्त्वे प्र[illegible]संक्रामतीति तदप्यनैकान्तिकं। नैर्मल्यादपकृष्टेऽपि जलादौ आदित्यादयः प्रतिसंक्रान्ताः समुपलभ्यन्ते। यदप्युक्तमपरिच्छिन्नस्य नास्ति प्रतिसंक्रान्तिरिति तदप्ययुक्तं। व्यापकस्याकाशस्य दर्पणादौ प्रतिसंक्रान्तिदर्शनात्। एवं सति न काचिदनुपपत्तिः प्रतिबिम्बदर्शनस्य॥

ननु सात्त्विकपरिणामरूपे बुद्धिसत्त्वे पुरुषसन्निधानादभिव्यङ्ग्यायाश्चिच्छक्तेर्बाह्याकारसंक्रान्तौ पुरुषस्य सुखदुःखरूपो भोग इत्युक्तं तदनुपपन्नं, तदेव चित्तसत्त्वं प्रकृतावपरिणतायां कथं सम्भवति, किमर्थश्च तस्याः परिणामः। तत्रोच्यते‡। पुरुषस्यार्थोपभोगसम्पादनं तया कर्त्तव्यमतः पुरुषार्थकर्त्तव्यतया तस्याः युक्त एव परिणामः॥

नन्वनुपपन्नं पुरुषार्थकर्त्तव्यताया एवानुपपत्तेः। पुरुषार्थो मया कर्त्तव्य इत्येवंविधोऽध्यवसायः पुरुषार्थकर्त्तव्यतोच्यते, जडायाश्च प्रकृतेः कथमेवंविधोऽध्यवसायः। अस्ति चेदध्यवसायः, कथं जडत्वं।

---

* नियतपरिमाणस्येति C पुस्तकपाठः।

† तड़ामाशाविति C पुस्तकपाठः।

‡ यथोच्यत इति C पुस्तकपाठः।

ऽभिधीयते। अनुलोमप्रतिलोमलक्षणे परिणामद्वये सहजं शक्तिद्वयमस्ति, तदेव पुरुषार्थकर्त्तव्यतोच्यते। सा च शक्तिरचेतनायाः प्रकृतेः सहजा एव। तत्र महदादिमहाभूतपर्य्यन्तोऽस्या बहिर्मुखतयानुलोमः परिणामः। पुनः स्वकारणानुप्रवेशद्वारेणास्मितान्तः प्रतिलोमः परिणामः। इत्थं पुरुषस्य भोगपरिसमाप्तेः सहजशक्तिद्वयक्षयात् कृतार्था प्रकृतिर्न पुनः परिणाममारभते। एवं विधायाञ्च पुरुषार्थकर्त्तव्यतायां जडाया अपि प्रकृतेर्न काचिदनुपपत्तिः॥

ननु यदीदृशी शक्तिः सहजैव प्रधानस्यास्ति तत् किमर्थं मोक्षार्थिभिः* मोक्षाय यत्नः क्रियते, मोक्षस्य चानर्थनीयत्वे तदुपदेशकस्य शास्त्रस्यानर्थक्यं। उच्यते। योऽयं प्रकृतिपुरुषयोरनादिर्भोग्यभोक्तृभावलक्षणः सम्बन्धः, तस्मिन् सति व्यक्तचेतनायाः प्रकृतेः कर्तृत्वाभिमानात् दुःखानुभवे सति कथमियं दुःखनिवृत्तिरात्यन्तिकी मम स्यादिति भवत्येवाध्यवसायः। अतो दुःखनिवृत्त्युपायोपदेशकशास्त्रोपदेशापेक्षास्त्येव प्रधानस्य। तथाभूतमेव कर्म्मानुरूपं बुद्धिसत्त्वं† शास्त्रोपदेशस्य विषयः। दर्शनान्तरेष्वप्येवंविध एवाविद्यास्वभावः शास्त्रेऽधिक्रियते। स च मोक्षाय प्रयतमान एवंविधमेव शास्त्रोपदेशं सहकारिणमपेक्ष्य मोक्षाख्यं फलमासादयति। सर्व्वाण्येव कार्य्याणि प्राप्तायां सामग्र्यां‡ आत्मानं लभन्ते, अस्य च प्रतिलोमपरिणामद्वारेणैवोत्पाद्यस्य मोक्षाख्यस्य कार्य्यस्य ईदृश्येव सामग्री प्रमाणेन निश्चिता, प्रकारान्तरेणानुपपत्तेः। अतस्तां विना कथं

---

* तदर्थिभिरिति F पुस्तकपाठः।

† कर्म्मात्मरूपं बुद्धिसत्त्वमिति C पुस्तकपाठः।

‡ समग्रायां सामग्र्यामिति F पुस्तकपाठः।

भवितुमर्हति। अतः स्थितमेतत्। संक्रान्तविषयोपरागमभिव्यक्त-चिच्छायं बुद्धिसत्त्वं विषयनिश्चयद्वारेण समग्रां लोकयात्रां निर्व्वाहयतीत्येवंविधमेव चित्तं पश्यन्तो भ्रान्ताः स्वसंवेदनं चित्तं, चित्तमात्रञ्च जगदित्येवं ब्रुवाणाः प्रतिबोधिता भवन्ति॥२२॥

ननु यद्येवंविधादेव चित्तात् सकलव्यवहारनिष्पत्तिः* कथं प्रमाणशून्यो द्रष्टा अभ्युपपद्यते† इत्याशङ्क्य द्रष्टुः‡ प्रमाणमाह।

## तदसङ्ख्येयवासनाभिश्चित्रमपि§ परार्थं संहत्यकारित्वात्॥२३॥

'तत्' एतच्चित्तं, 'असङ्ख्यातुमशक्याभिः, 'वासनाभिः', 'चित्रमपि' नानारूपमपि, 'परार्थं' परस्य स्वामिनो भोक्तुर्भोगापवर्गलक्षणमर्थं साधयतीति। कुतः, 'संहत्यकारित्वात्' संहत्य सम्भूय मिलित्वा अर्थक्रियाकारित्वात्। यच्च संहत्यार्थक्रियाकारि तत्परार्थं दृष्टं, यथा शयनासनादि। सत्त्व-रजस्तमांसि च चित्तलक्षणपरिणामभाञ्जि संहत्यकारीणि, अतः परार्थानि। यस्य परः स पुरुषः॥

ननु च यादृशेन शयनासनादिना परेण शरीरवता परार्थत्वमुपलब्धं,|| तद्दृष्टान्तबलेन तादृश एव परः सिध्यति, यादृशश्च भवतां परोऽसंहतरूपोऽभिप्रेतस्तद्विपरीतस्य सिद्धेरयमिष्टविघातकृद्धेतुः¶। उच्यते।

---

* सकलव्यवहारनिर्वृत्तिरिति C पुस्तकपाठः।

† अभ्युपगम्येत इति C. अभ्युपगन्तव्य इति F पुस्तकपाठः।

‡ अन्वेरीति C पुस्तकपाठः।

§ चित्रमपीति C पुस्तकपाठः। परन्त्वयं न समीचीनः।

|| पारार्थ्यमुपलब्धमिति F पुस्तकपाठः।

¶ अयमिष्टविघातको हेतुरिति C पुस्तकपाठः।

यद्यपि सामान्येन परार्थमात्रे व्याप्तिर्गृहीता तथापि सत्त्वादि-
विलक्षणधर्मिपर्यालोचनया तद्विलक्षण एव भोक्ता परः सिध्यति ।
यथा चेन्धनाहृते शिखरिणि विलक्षणाद्धूमादग्निरनुमीयमान इतर-
वह्निविलक्षणस्येन्धनप्रभव एव प्रतीयते, एवमिहापि विलक्षणस्य
सत्त्वाख्यस्य भोग्यस्य परार्थत्वेऽनुमीयमाने तथाविध एव भोक्ताऽधि-
ष्ठाता परश्चिन्मात्ररूपोऽसंहतः सिध्यति । यदि वा तस्य परत्वं
सर्व्वात्मकत्वमेव प्रतीयते, तथापि तामसेभ्यो विषयेभ्यः प्रकृष्यते शरीरं
प्रकाशरूपेन्द्रियाश्रयत्वात् । तस्मादपि प्रकृष्यन्ते इन्द्रियाणि । ततो-
ऽपि प्रकृष्टं सत्त्वं प्रकाशरूपं । तथापि यः प्रकाशकः प्रकाश्यविल-
क्षणः स चिद्रूप एव भवतीति कुतस्तस्य संहतत्वं ॥ २३ ॥

इदानीं शास्त्रफलं कैवल्यं निर्णेतुं दशभिः सूत्रैरुपक्रमते ।

**विशेषदर्शिन आत्मभावभावनानिवृत्तिः ॥ २४ ॥**

एवं सत्त्वपुरुषयोरन्यत्वे साधिते* यस्तयोर्विशेषं पश्यति अयमस्मा-
दन्य इत्येवंरूपं,† तस्य विज्ञातचित्तसत्त्वस्वरूपस्य चित्ते या 'आत्म-
भावभावना', सा निवर्त्तते । चित्तमेव कर्तृ ज्ञातृ भोक्तृ इत्यभिमानो
निवर्त्तते ॥ २४ ॥

तस्मिन् सति किं भवतीत्याह ।

**तदा विवेकनिम्नं कैवल्यप्राग्भारं‡ चित्तं ॥ २५ ॥**

---

* प्रतिपादिते इति C पुस्तकपाठः ।

† अहमस्मादन्य इत्येवंरूपमिति C पुस्तकपाठः ।

‡ कैवल्यप्रभवमिति F पुस्तकपाठः ।

यदस्याज्ञाननिम्नं वहिर्मुखं विषयोपभोगफलं चित्तमासीत्तदिदानीं 'विवेकनिम्नं'* विवेकमार्गमन्तर्मुखं, 'कैवल्यप्राग्भारं' कैवल्यफलं, कैवल्यप्रारम्भं वा सम्पद्यत इति ॥ २५॥

अस्मिंश्च† विवेकवाहिनि चित्ते येऽन्तरायाः प्रादुर्भवन्ति तेषां हेतुप्रतिपादनद्वारेण त्यागोपायमाह।

**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २६ ॥**

तस्मिन् समाधौ स्थितस्य, 'छिद्रेषु' अन्तरालेषु, यानि 'प्रत्ययान्तराणि' व्युत्थानरूपाणि ज्ञानानि, तानि प्राग्भवेभ्यः‡ व्युत्थानानुभवजेभ्यः 'संस्कारेभ्यः', अहं ममेत्येवंरूपाणि क्षीयमाणेभ्योऽपि प्रभवन्ति। अन्तःकरणोच्छित्तिद्वारेण तेषां हानं कर्त्तव्यमित्युक्तं भवति ॥ २६ ॥

हानोपायस्च पूर्व्वमेवोक्त इत्याह।

**हानमेषां क्लेशवदुक्तं ॥ २७ ॥**

यथा 'क्लेशानामविद्यादीनां, हानं पूर्व्वमुक्तं, तथा संस्काराणामपि कर्त्तव्यं। यथा ते ज्ञानाग्निना प्लुष्टा दग्धवीजकल्पा न पुनश्चित्तभूमौ प्ररोहं लभन्ते, तथा संस्कारा अपि ॥ २७ ॥

एवं प्रत्ययान्तरानुदये स्थिरीभूते§ समाधौ याट्टशस्य योगिनः समाधेः प्रकर्षप्राप्तिर्भवति, तथाविधमुपायमाह¶।

---

* विवेकविषयमिति E पुस्तकपाठः।

† तस्मिंश्चेति F पुस्तकपाठः।

‡ प्राक्तनेभ्य इति H पुस्तकपाठः।

§ स्थिरीकृत इति F पुस्तकपाठः।

¶ एतत्पाठः सर्व्वत्र वर्त्तते, परन्तु उपायमिति न समीचीनं याट्टशस्य योगिन इति पाठेन सह विरुद्धत्वात्।

प्रसङ्ख्यानेऽप्यकुसीदस्य सर्व्वथा विवेकख्यातेर्धर्म्ममेघः समाधिः ॥ २८ ॥

'प्रसङ्ख्यानं' यावतां तत्त्वानां यथाक्रमं व्यवस्थितानां परस्परविलक्षणस्वरूपविभावनं, तस्मिन् सति 'अपि', 'अकुसीदस्य' फलमलिप्सोः, प्रत्ययान्तराणामनुदये 'सर्व्वप्रकारविवेकख्यातेः' परिशेषात् 'धर्म्ममेघः समाधिः' भवति, प्रकृष्टमशुक्लकृष्णं धर्म्मं परमपुरुषार्थसाधकं मेहति सिञ्चतीति 'धर्म्ममेघः' । अनेन प्रकृष्टधर्म्मस्यैव ज्ञानहेतुत्वमित्युपपादितं भवति ॥ २८ ॥

तस्माद्धर्म्ममेघात् किं भवतीत्याह* ।

ततः क्लेशकर्म्मनिवृत्तिः ॥ २९ ॥

'क्लेशानामविद्यादीनामभिनिवेशान्तानां, 'कर्म्मणाञ्च शुक्लादिभेदेन त्रिविधानां, ज्ञानोदयात् पूर्व्वपूर्व्वकारणनिवृत्त्या 'निवृत्तिः', भवतीत्यर्थः ॥ २९ ॥

निवृत्तेषु तेषु किं भवतीत्याह ।

तदा सर्व्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पं ॥ ३० ॥

आव्रियते चित्तमेभिरिति 'आवरणानि' क्लेशाः, त एव 'मलाः', तेभ्यः 'अपेतस्य' तद्विरहितस्य, 'ज्ञानस्य' गतघनगगननिभस्य, 'आन-

---

* भवतीत्यत आहेति C पुस्तकपाठः ।

नयात्' अनवच्छेदात्, 'ज्ञेयं', 'अल्पं' गणनास्पदं भवति, अक्लेशेनैव सर्व्वं ज्ञेयं जानातीत्यर्थः ॥ ३० ॥

ततः किमित्याह ।

## ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानां ॥ ३१ ॥

'कृतः' निष्पादितः, भोगापवर्गलक्षणः पुरुषार्थः प्रयोजनं यैस्ते 'कृतार्थाः', 'गुणाः' सत्त्व-रजस्तमांसि, तेषां 'परिणामः' आ पुरुषार्थ-समाप्तेरानुलोम्येन प्रातिलोम्येन चाङ्गाङ्गिभावावस्थितिलक्षणः, तस्य योऽसौ 'क्रमः' वक्ष्यमाणः, तस्य परिसमाप्तिः' निष्ठा, न पुनरुद्भव इत्यर्थः ॥ ३१ ॥

क्रमस्योक्तस्य लक्षणमाह ।

## क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥३२॥

'क्षणः' अल्पीयान् कालः, तस्य योऽसौ 'प्रतियोगी' एकक्षणवि-लक्षणः । 'परिणामापरान्तनिर्ग्राह्यः' अनुभूतेषु क्षणेषु पश्चात् सङ्कल-नबुद्ध्या यो गृह्यते स क्षणानां 'क्रमः' उच्यते । न ह्यननुभूतेषु क्षणेषु क्रमः परिज्ञातुं शक्यः ॥ ३२ ॥

इदानीं फलभूतस्य कैवल्यस्यासाधारणं स्वरूपमाह ।

## पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूप-प्रतिष्ठा वा चितिशक्तिरिति ॥ ३३ ॥

समाप्तभोगापवर्गलक्षणपुरुषार्थानां 'गुणानां', यः 'प्रतिप्रसवः'

प्रतिलोमपरिणामसमाप्तौ विकारानुद्भवः, यदि वा चिच्छक्तेर्वृत्तिसा-
रूप्यनिवृत्तौ स्वरूपमात्रेणावस्थानं तत् 'कैवल्यं' उच्यते ॥

न केवलमस्मद्दर्शने चेतनः कैवल्यावस्थायामेवम्भूतश्चिद्रूपः, यावद्दर्शना-
न्तरेष्वपि विमृश्यमाण एवंविधरूपोऽवतिष्ठते । तथाहि संसारदशाया-
मात्मा कर्तृत्व-भोक्तृत्वानुसन्धातृत्वमयः प्रतीयते । अन्यथा यद्ययमेकः
चेतनस्तथाविधो न स्यात्तदा ज्ञानक्षणानामेव पूर्व्वापरानुसन्धानाभावे*
नियतकर्म्मफलसम्बन्धो न स्यात्, कृतनाशाकृताभ्यागमप्रसङ्गश्च । यदि
येनैव शास्त्रोपदिष्टमनुष्ठितं कर्म्म तस्यैव भोक्तृत्वं भवेत् तदा हिता-हित-
प्राप्तिपरिहारार्थं सर्व्वस्य प्रवृत्तिर्घटते । सर्व्वस्यैव व्यवहारस्य हानोपा-
दानलक्षणस्यानुसन्धानेनैव व्याप्तत्वात् ज्ञानक्षणानां परस्परभेदेनानु-
सन्धानशून्यत्वात् तदनुसन्धानाभावे‡ कस्यचिदपि व्यवहारस्यानुपपत्तेः
कर्त्ता भोक्तानुसन्धाता यः स आत्मेति व्यवस्थाप्यते । मोक्षदशायान्तु
सकलग्राह्य-ग्राहकलक्षणव्यवहाराभावात् चैतन्यमात्रमेव तस्यावशिष्यते ।
तच्च चैतन्यं चितिमात्रत्वेनैवोपपद्यते न पुनरात्मसंवेदनेन, यस्मा-
द्विषयग्रहणसमर्थत्वमेव चितेरूपं, नात्मग्राहकत्वं । तथाहि अर्थस्तथा
गृह्यमाणः अयमिति गृह्यते । स्वरूपं गृह्यमाणमहमिति । न पुन-
र्युगपद्बहिर्मुखतान्तर्मुखतालक्षणव्यापारद्वयं परस्परं विरुद्धं कर्त्तुं
शक्यं । अत एकस्मिन् समये व्यापारद्वयस्य कर्त्तुमशक्यत्वात् चिद्रूप-
तयैवावशिष्यते । अतो मोक्षावस्थायां निवृत्ताधिकारेषु गुणेषु

---

* ज्ञानलक्षणानामेव पूर्व्वापरानुसन्धानशून्यानां भावे इति C पुस्तकपाठः ।

† हितहितप्राप्यपरिहारायेति F पुस्तकपाठः ।

‡ अनुसन्धानाभावे इति C पुस्तकपाठः । तदनुसन्धानभाव इति F पुस्तकपाठः ।

चिन्मात्र एवात्मावतिष्ठत इत्येवं युक्तं। संसारदशायान्तु एवंभूतस्य कर्त्तृत्वं भोक्तृत्वमनुसन्धातृत्वञ्च सर्व्वमुपपद्यते। तथाहि योऽयं प्रकृत्या महदादिर्नैसर्गिकोऽस्य भोग्य-भोक्तृभावलक्षणः सम्बन्धः अविवेकख्यातिमूलः, तस्मिन् सति पुरुषार्थकर्त्तव्यतारूपयन्निद्वयसद्भावे या महदादिभावेन परिणतिस्तस्यां संयोगे सति यदात्मनोऽधिष्ठातृत्वं चिच्छायासमर्पणसामर्थ्यं, बुद्धिसत्त्वस्य च सङ्क्रान्तचिच्छायाग्रहणसामर्थ्यं, चिद्वष्टम्भायाश्च बुद्धेर्योऽयं कर्त्तृत्व-भोक्तृत्वाध्यवसायस्तत एव सर्व्वस्यानुसन्धानपूर्व्वकस्य व्यवहारस्य निष्पत्तेः किमन्यैः फल्गुभिः कल्पनाजालैः।

यदि पुनरेवम्भूतमार्गव्यतिरेकेण पारमार्थिकमात्मनः कर्त्तृत्वाद्यङ्गीक्रियते, तदास्य परिणामित्वप्रसङ्गः, परिणामित्वाच्चानित्यत्वे तस्यात्मत्वमेव न स्यात्। न ह्येकस्मिन्नेव समये एकेनैव रूपेण परस्परविरुद्धावस्थानुभवः सम्भवति। तथाहि यस्यामवस्थायां आत्मसमवेते समुत्पन्ने सुखे तस्यानुभवितृत्वं, न तस्यामेवावस्थायां दुःखानुभवितृत्वं। अतोऽवस्थानानात्वात्तदभिन्नस्यावस्थावतोपि नानात्वं, नानात्वेन च परिणामित्वाचात्मत्वं नापि नित्यत्वं। अत एव शान्तब्रह्मवादिभिः साङ्ख्यैरात्मनः सदैव संसारदशायां मोक्षदशायाञ्चैकरूपत्वमङ्गीक्रियते।

ये तु वेदान्तवादिनश्चिदानन्दमयत्वमात्मनो मोक्षं मन्यन्ते, तेषां न युक्तः पक्षः। तथाहि आनन्दस्य सुखस्वरूपत्वात् सुखस्य च संवेद्यमानतयैव प्रतिभासात् संवेद्यमानत्वञ्च संवेदनव्यतिरेकेणानुपपन्नमिति संवेद्य-संवेदनयोर्द्वयोरभ्युपगमात् अद्वैतहानिः। अथ सुखात्मकत्वमेव तस्योच्यते। तत् विरुद्धधर्माध्यासादनुपपन्नं। न हि संवेदनं संवेद्यञ्चैकं भवितुमर्हति। किञ्चाद्वैतवादिभिः कर्म्मात्म-परमात्मभेदेनात्मा द्विविध

उच्यते* । तत्र येनैव रूपेण सुख-दुःखभोक्तृत्वं कर्मात्मनः, तेनैव रूपेण यदि परमात्मनः स्यात्तदा कर्मात्मकपरमात्मनः परिणामित्वमविद्यास्वभावत्वञ्च स्यात्। अथ न साक्षाद्भोक्तृत्वं, किन्तु तदुपढौकितमुदासीनतयाधिष्ठातृत्वेन स्वीकरोति, तदाऽसहर्षेणानुप्रवेशः। ज्ञानस्वरूपता च पूर्व्वमेव निराकृता। किञ्चाविद्यास्वभावत्वे निःस्वभावत्वात्मनां कः शास्त्राधिकारी। न तावन्नित्यनिर्मुक्तत्वात् परमात्मा, नाप्यविद्यास्वभावत्वात् कर्मात्मा। ततश्च सकलशास्त्रवैयर्थ्यप्रसङ्गः। अविद्यामयत्वे च जगतोऽङ्गीक्रियमाणे कस्याविद्येति विचार्यते। न तावत्परमात्मनः नित्यनिर्मुक्तत्वात् विद्यारूपत्वाच्च। कर्मात्मनोऽपि निःस्वभावतया शशविषाणप्रख्यत्वे कथमविद्यासम्बन्धः। अथोच्यते एतदेवाविद्याया अविद्यात्वं यदविचारणीयत्वं नाम। य द्धि विचारेण दिनकरकरस्पृष्टनीहारवद्विलयमुपयाति, सैवाविद्येत्युच्यते। नैवं। यद्वस्तु किञ्चित्कार्य्यं करोति तदवश्यं कुतश्चिद्भिन्नमभिन्नं वा वक्तव्यं, अविद्यायाश्च संसारलक्षणप्रपञ्चकार्य्यकर्तृत्वमवश्यमङ्गीकर्त्तव्यं, तस्मिन् सत्यपि यद्यनिर्व्वाच्यत्वमुच्यते, तदा कस्यचिदपि वाच्यत्वं न स्यात् ब्रह्मणोऽप्यवाच्यताप्रसक्तिः। तस्मादधिष्ठातृरूपतातिरेकेण नान्यदात्मनो रूपमुपपद्यते। अधिष्ठातृत्वञ्च चिद्रूपत्वमेव तद्व्यतिरिक्तस्य धर्म्मस्य कस्यचित् प्रमाणानुपपत्तेः।

यैरपि नैयायिकादिभिरात्मा चेतनायोगाच्चेतन इत्युच्यते, चेतनापि तस्य मनःसंयोगजा। तथाहि इच्छा-ज्ञान-प्रयत्नादयो गुणास्तस्य

---

* इष्यत इति C पुस्तकपाठः ।

केचित् कर्त्तृरूपमेवात्मानमिच्छन्ति। तथाहि विषयसान्निध्ये या ज्ञानलक्षणा क्रिया समुत्पन्ना तस्या विषयसंवित्तिः फलं, तस्याञ्च फलरूपायां संवित्तौ स्वरूपं प्रकाशरूपतया प्रतिभासते, विषयस्य ग्राह्यतया, आत्मा ग्राहकत्वेन। घटमहं जानामीत्यनेनाकारेण तस्याः समुत्पत्तेः। क्रियायाः कारणं कर्त्तैव भवतीत्यतः कर्त्तृत्वं भोक्तृत्वञ्चात्मनो रूपमिति। तदनुपपन्नं। यस्मात्तासां संवित्तीनां किं कर्त्तृत्वं युगपत् प्रतिपद्यते क्रमेण वा। युगपत्कर्त्तृत्वे क्षणान्तरे तस्य कर्त्तृत्वं न स्यात्। अथ क्रमेण कर्त्तृत्वं, तदैकरूपस्य न घटते। एकेन रूपेण चेत्तस्य कर्त्तृत्वं तदा एकस्य सदैव सन्निहितत्वात् सर्व्वं फलमेकरूपं स्यात्। अथ नानारूपतया तस्य कर्त्तृत्वं तदा परिणामित्वं। परिणामित्वाच्च न चिद्रूपत्वं। अतश्चिद्रूपत्वमात्मन इच्छद्भिर्न साक्षात्कर्त्तृत्वमङ्गीकर्त्तव्यं। यादृशमस्माभिः कर्त्तृत्वमात्मनः प्रतिपादितं कूटस्थस्य नित्यस्य चिद्रूपस्य तदेवोपपन्नं।

एतेन स्वप्रकाशस्यात्मनो विषयसंवित्तिद्वारेण ग्राहकत्वमभिव्यज्यत इति ये वदन्ति, तेऽप्येतेनैव निराकृताः।

केचिद्विमर्शात्मकत्वमात्मनश्चिन्मयत्वमिच्छन्ति। ते ह्याहुर्न विमर्शव्यतिरेकेण चिद्रूपत्वमात्मनो निरूपयितुं शक्यं। जडात् किल वैलक्षण्यं चिद्रूपत्वमुच्यते। तच्च विमर्शव्यतिरेकेणानिरूप्यमाणं नान्यथावतिष्ठते। तदनुपपन्नं। इदमित्यमेवंरूपमिति यो विचारः स विमर्श इत्युच्यते, स चास्मिताव्यतिरेकेणोत्थानमेव न लभते। तथाहि आत्मन्युपजायमानो विमर्शः अहमेवम्भूत इत्यनेनाकारेण संवेद्यते। ततस्तत्रांशत्रयसम्भिन्नस्यात्मलक्षणस्यार्थस्य तत्र स्फुरणाच्च विकल्पस्वरूप-

तातिक्रमः। विकल्पस्याध्यवसायात्मा बुद्धिधर्मो न चिद्धर्मः। कूटस्थनित्यत्वेन चितेः सर्वैकरूपत्वान्नाहंकारानुप्रवेशः। तदनेन सविमर्शत्वमात्मनः प्रतिपादयता बुद्धिरेवात्मत्वेन भ्रान्त्या प्रतिपादिता, न प्रकाशात्मनः परस्य पुरुषस्य स्वरूपमवगतमिति।

एवं सर्व्वेष्वपि दर्शनेष्वधिष्ठातृत्वं विहाय नान्यदात्मनो रूपमुपपद्यते। अधिष्ठातृत्वञ्च चिद्रूपत्वं। तच्च जडाद्विलक्षणमेव। चिद्रूपतया यदधितिष्ठति तदेव भोग्यतां नयति*। यच्च चेतनाधिष्ठितं तदेव सकलव्यवहारयोग्यं भवति। एवञ्च सति कृतकृत्यत्वात् प्रधानस्य व्यापारनिवृत्तौ यदात्मनः कैवल्यमस्माभिरुक्तं तद्विहाय दर्शनान्तराणामपि नान्या गतिरस्ति तस्मादिदमेव युक्तमुक्तं वृत्तिसारूप्यपरीहारेण स्वरूपप्रतिष्ठा चितिशक्तेः कैवल्यं।

तदेवं सिद्धान्तरेभ्यो विलक्षणां सर्व्वसिद्धिमूलभूतां समाधिसिद्धिमभिधाय जात्यन्तरपरिणामलक्षणस्य च सिद्धिविशेषस्य प्रकृत्यापूरणमेव कारणमित्युपपाद्य धर्म्मादीनां प्रतिबन्धकनिवृत्तिमात्र एव सामर्थ्यमिति प्रदर्श्य निर्म्माणचित्तानामस्मितामात्रादुद्भव इत्युक्त्वा तेषाञ्च योगिचित्तमेवाधिष्ठानात्मकमिति प्रदर्श्य योगिचित्तस्य चित्तान्तरवैलक्षण्यमभिधाय तत्कर्म्मणामलौकिकत्वञ्चोपपाद्य विपाकानुगुणानां वासनानामभिव्यक्तिसामर्थ्यं कार्य्यकारणयोरैकत्वप्रतिपादनेन व्यवहितानामपि वासनानामानन्तर्य्यमुपपाद्य तासामानन्त्येऽपि हेतुफलादिद्वारेण हानमुपदिश्यातीतादिष्वध्वसु धर्म्माणां सद्भावमुपपाद्य वि-

---

* भोग्यतामेतीति C पुस्तकपाठः।

ज्ञानवादं निराकृत्य साकारवादं प्रतिष्ठाप्य पुरुषस्य ज्ञातृत्वमुक्त्वा चित्तद्वारेण सकलव्यवहारनिष्पत्तिमुपपाद्य पुरुषसिद्धौ प्रमाणमुपदर्श्य कैवल्यनिर्णयाय दशभिः सूत्रैः क्रमेणोपयोगिनोऽर्थानभिधाय शास्त्रान्तरेष्वेतदेव कैवल्यमित्युपपाद्य कैवल्यस्वरूपं निर्णीतमिति व्याकृतः कैवल्यपादः ।

सर्व्वे यस्य वशप्रतापवपुषः पादान्तसेवावधि-
प्रभावस्फुटितेषु मूर्द्धसु दधत्याज्ञां धरित्रीभृतः ।
पदव्याजमवाप्य गर्व्वमसमं शास्त्रेष्वमत्रापि मिता
स श्रीभोजमहीपतिः फणिपतेः सूत्रेषु वृत्तिं व्यधात् ॥

इति श्रीमहाराजाधिराजश्रीभोजदेवविरचितायां राजमार्त्तण्डाभिधायां पातञ्जलयोगशास्त्रवृत्तौ कैवल्यपादश्चतुर्थः । समाप्ता चेयं पातञ्जलयोगसूत्रवृत्तिः ॥०॥

---

